यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥ ११ ॥
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥ १२ ॥
स्मृते सकलकल्याणभाजनं यत्र जायते।
पुरुषं तमजं नित्यं व्रजामि शरणं हरिम्॥ १३ ॥
सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः।
देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनः॥ १४ ॥
विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम्।
वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम्॥ १५ ॥
विनायकं गुरुं भानुं ब्रह्म-विष्णु-महेश्वरान्।
सरस्वतीं प्रणम्यादौ सर्वकार्मार्थसिद्धये॥ १६ ॥

---

भावार्थ—जहाँ योगेश्वर भगवान् श्रीकृष्ण रहते हैं, और जहाँ पार्थ धनुर्धर (अर्जुन) रहते हैं, वहाँ श्री और विजय होते हैं, यह ध्रुव नियम है और ऐसा मेरा मत है॥ ११ ॥ अनन्य चिन्तन करते हुए जो मन हमारी उपासना करते हैं, उन नित्य भक्तों का योगक्षेम मैं स्वयं करता हूँ॥ १२ ॥ जिसके स्मरण करने पर जीव सम्पूर्ण कल्याणों का भाजन (पात्र) हो जाता है। उस भगवान् हरि की शरण में मैं जाता हूँ॥ १३ ॥ त्रिभुवन के ईश्वर (स्वामी) तीनों ब्रह्मा, शंकर एवं जनार्दन भगवान् और (सभी) देवता सभी आरम्भ किए जानेवाले कार्यों में हमको सिद्धि प्रदान करे॥ १४ ॥ विश्वेश, माधव, ढुण्ढि, दण्डपाणि, भैरव, काशी, गुहा, गङ्गा, भवानी और मणिकर्णिका की वन्दना कर रहा हूँ॥ १५ ॥ सभी कार्य एवं मनोरथों की सिद्धि के लिए कार्य के आरम्भ में विनायक गुरु भानु ब्रह्मा–विष्णु–महेश्वर और सरस्वती को प्रणाम करके कार्य प्रारम्भ करना चाहिए॥ १६ ॥

---

## संकल्पः

कर्ता के दायें हाथ में जल, अक्षत और कुछ द्रव्य रखवाकर आचार्य सन्तानगोपालअनुष्ठान को प्रारम्भ करवाने के लिए निम्न संकल्प करावें-

ॐ विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्रीब्रह्मणोऽह्नि द्वितीयपरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वत-मन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे जम्बूद्वीपे भरतखण्डे भारतवर्षे आर्यावर्तैकदेशे, अमुकक्षेत्रे अमुकनद्याः अमुकतीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ महामाङ्गल्यप्रद-मासोत्तमे मासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु सत्सु एवं गुणगणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्माहं ( वर्माऽहम्, गुप्तोऽहम्, दोसोऽहम् ) मम सभार्यस्य इह जन्मनि जन्मान्तरे वा ज्ञाताज्ञातकृतानां बालघातविप्रधन-हरणादिसर्वविधपापानां निर्वृत्तिपूर्वकं पूर्वजन्मार्जितानपत्यत्वादिदोषपाप-शमनार्थं मम भार्याया वन्ध्यात्वदोषनिरासपूर्वकं दीर्घायुष्यमत् पुत्रप्राप्त्यर्थं श्रीकृष्णदेवताप्रीत्यर्थं च होमात्मक-श्रीसन्तानगोपालानुष्ठानम् अहं करिष्ये ॥

तदङ्गविहितं गणेशपूजनपूर्वकं पुण्याहवाचनं मातृकापूजनं वसोर्द्धारा-पूजनम् आयुष्यमन्त्रजपं नान्दीश्राद्धमाचार्यादिवरणानि च करिष्ये।

---

## गणपतिपूजनम्

### आवाहनम्

**ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वां निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भ धम्॥**

ॐ भूर्भुव स्वः सिद्धि–बुद्धि सहिताय गणपतये नमः, गणपतिमावाहयामि स्थापयामि।

**ॐ अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम्॥**

ॐ भूर्भुव स्वः गौर्ये नमः, गौरीमावाहयामि स्थापयामि।

### प्रतिष्ठापनम्

**ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञर्ठ० समिमं दधातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ॥**

गणेशाऽम्बिके सुप्रतिष्ठिते वरदे भवेताम्।

### आसनम्

**ॐ पुरुष एवेदर्ठ० सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, आसनार्थे अक्षतान् समर्पयामि।

### पाद्यम्

**ॐ एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, पाद्यं समर्पयामि।

---

आचार्य 'गणानां त्वा०' व 'ॐ अम्बे अम्बिके०' से गणेश व अम्बा का आवाहन कर्ता से करवायें, तदुपरान्त 'ॐ मनो जूतिर्जु०' के द्वारा से प्रतिष्ठापन करवाके 'ॐ पुरुष०' से आसन प्रदान करवाये तथा 'ॐ एतावानस्य०' से पाद्य चढ़वायें।

अर्घ्यम्

ॐ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, अर्घ्यं समर्पयामि।

आचमनीयम्

ॐ ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, आचमनीयं समर्पयामि।

स्नानम्

ॐ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, स्नानं समर्पयामि।

पञ्चामृतस्नानम्

ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्त्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, पञ्चामृत स्नानं समर्पयामि।

शुद्धोदकस्नानम्

ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणास्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, शुद्धोदकस्नानं समर्पयामि।

---

पुनः 'ॐ त्रिपादूर्ध्व०' से अर्घ्य प्रदान करवाये, तथा 'ॐ ततो विराड०' का उच्चारण करके आचमनीय जल अर्पित करवायें। फिर 'ॐ तस्माद्यज्ञात्०' से स्नान करवाके 'ॐ पंञ्चनद्यः०' से पञ्चामृत द्वारा स्नान करवाके पुनः 'ॐ शुद्धवालः०' इस मन्त्र से शुद्ध जल से गणेशाम्बिका को स्नान करावें।

वस्त्रम्

**ॐ युवा सुवासाः परिवीत आगात्सऽउश्रेयान्भवति जायमानः। तन्धीरासः कवयऽउन्नयन्ति स्वाद्ध्यो मनसा देवयन्तः॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, वस्त्रं समर्पयामि।

उपवस्त्रम्

**ॐ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः। वासो अग्ने विश्वरूपर्ठ० संव्ययस्व विभावसो॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, उपवस्त्रं समर्पयामि।

यज्ञोपवीतम्

**ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्। आयुष्यमग्र्चं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, यज्ञोपवीतं समर्पयामि।

गन्धम्

**ॐ त्वां गन्धर्वा अखनंस्त्वामिन्द्रस्त्वां बृहस्पतिः। त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, गन्धं समर्पयामि।

अक्षतान्

**ॐ अक्षन्नमीमदन्त ह्यव प्रिया अधूषत। अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, अक्षतान् समर्पयामि।

---

'ॐ युवा सुवासाः०' से गणेशाम्बिका के ऊपर कर्ता से वस्त्र तथा 'ॐ सुजातो०' मन्त्र का आचार्य उच्चारण करते हुए उपवस्त्र कर्ता से ही प्रदान करवायें। 'ॐ यज्ञोपवीतम्०' इसका उच्चारण करते हुए गणेशाम्बिका के ऊपर यज्ञोपवीत कर्ता से चढ़वायें। उपरान्त 'ॐ त्वां गन्धर्वा०' के द्वारा गन्ध चढ़वाने के पश्चात् 'ॐ अक्षन्नमीम०' से अक्षत प्रदान करवायें।

पुष्पमालाम्

**ॐ ओषधीः प्रतिमोदध्वं पुष्पवतीः प्रसूवरीः।**
**अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, पुष्पमालां समर्पयामि।

दूर्वाम्

**ॐ काण्डात्काण्डात् प्ररोहन्ति पुरुषः परुषस्परि।**
**एवा नो दूर्वे प्रतनु सहस्रेण शतेन च॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, दूर्वां समर्पयामि।

नानापरिमलद्रव्याणि

**ॐ अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परि बाधमानः।**
**हस्तघ्नो विश्वा वयुनानि विद्वान्पुमान्पुमाꣳ॰ सं परिपातु विश्वतः॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, नानापरिमलद्रव्याणि समर्पयामि।

सिन्दूरम्

**ॐ सिन्धोरिव प्राध्वने शुघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दनूर्मिभिः पिन्वमानः॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, सिन्दूरं समर्पयामि।

---

'ॐ ओषधीः०' इस मन्त्र का आचार्य उच्चारण करके गणेश व अम्बा पर पुष्पमाला कर्ता से चढ़वाये। पुनः 'ॐ काण्डात्काण्डात्०' इस मन्त्र का उच्चारण करके आचार्य गणेश व अम्बा को कर्ता से दूर्वा प्रदान करवाये। पुनः 'ॐ अहिरिवभोगैः०' इस मन्त्र का आचार्य उच्चारण करके गणेश और अम्बा को नानापरिमलद्रव्य कर्ता से प्रदत्त करवायें। आचार्य 'ॐ सिन्धोरिव०' इस मन्त्र का गणेश व अम्बा के ऊपर कर्ता से सिन्दूर चढ़वायें।

धूपम्

**ॐ धूरसि धूर्व धूर्वन्तं धूर्व तं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः। देवानामसि वह्नितमठं० सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, धूपं समर्पयामि।

दीपम्

**ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा। अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्योवर्चो ज्योतिर्वर्चः स्वाहा। ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, दीपं दर्शयामि।

नैवेद्यम्

**ॐ नाभ्या आसीदन्तरिक्षठं० शीर्ष्णो द्यौः समवर्तत।**
**पद्भ्यां भूमिर्दिशः श्रोत्रात्तथालोकाँ२॥ अकल्पयन्॥**

अनामामूलयोरङ्गुष्ठयोगेन नैवेद्यमुद्रां प्रदर्श्य ग्रासमुद्राः प्रदर्शयेत् तद्यथा— अङ्गुष्ठप्रदेशिनी मध्यमाभिः—ॐ प्राणाय स्वाहा॥ १॥ अङ्गुष्ठमध्यमानामिकाभिः ॐ अपानाय स्वाहा॥ २॥ अङ्गुष्ठानामिकाकनिष्ठिकाभिः ॐ व्यानाय स्वाहा॥ ३॥ कनिष्ठिका तर्जन्यङ्गुष्ठैः ॐ समानाय स्वाहा॥ ४॥ साङ्गुष्ठाभिः सवाङ्गुलिभिः ॐ उदानाय स्वाहा॥ ५॥ इति प्रदर्श्य ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, नैवेद्यं समर्पयामि। नैवेद्यान्ते आचमनीयं जलं समर्पयामि। मध्ये पानीयं समर्पयामि। उत्तरापोशनं समर्पयामि।

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, नैवेद्यं समर्पयामि।

---

आचार्य 'ॐ धूरसि०' इस मन्त्र का उच्चारण करके गणेशाम्बिका को कर्ता से धूप दिखवायें, पुनः 'ॐ अग्निर्ज्योति०' इस मन्त्र का उच्चारण करके गणेश व अम्बा को कर्ता से दीप दिखवाकर उसके दोनों हाथों को शुद्ध जल से धुलवायें। तदुपरान्त 'ॐ नाभ्या आसी०' इस मन्त्र का उच्चारण करके गणेश व अम्बा को कर्ता से नैवेंद्य प्रदान करावें।

### ताम्बूलम्

**ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः।**
**बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वर्ठ० हसः॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, ताम्बूलं समर्पयामि।

### आचमनीयजलम्

**गणाधिप! नमस्तुभ्यं गौरीसुत गजानन!।**
**गृहाण आचमनीयं त्वं सर्वसिद्धि प्रदायकम्॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, आचमनीयजलं समर्पयामि।

### ऋतुफलानि

**ॐ यत्पुरुषेण हविषा देवा यज्ञमतन्वत।**
**वसन्तोऽस्यासीदाज्यं ग्रीष्मऽइध्मः शरद्धवि॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, ऋतुफलानि समर्पयामि।

### दक्षिणाः

**ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्।**
**स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, दक्षिणां समर्पयामि।

### नीराजनम्

**ॐ इदर्ठ० हविः प्रजननं मे अस्तु दशवीरर्ठ० सर्वगणर्ठ० स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्नयभयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त॥ १॥ आ रात्रि पार्थिवर्ठ० रजः पितुरप्रायि धामभिः। दिवः सदार्ठ०सि बृहती वितिष्ठस आ त्वेषं वर्तते तमः॥ २॥**

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, आर्तिक्यं समर्पयामि।

---

आचार्य 'ॐ याः फलिनीर्या०' से ऋतुफल चढ़वायें। पुनः गणाधिप! से आचमनीय जल पुनः 'ॐ यत्पुरुषेण हविषा०' इस मन्त्र से ऋतुफल गणेश और अम्बा के ऊपर कर्ता से चढ़वायें। तदुपरान्त 'ॐ हिरण्यगर्भः०' इस मन्त्र से गणेश और अम्बा को दक्षिणा चढ़वायें। पुनः 'ॐ इदर्ठ० हविः०' और आ रात्रि० इस मन्त्र से गणेश और अम्बा की आरती करावें।

पुष्पाञ्जलिम्

**ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साद्ध्याः सन्ति देवाः॥**

ॐ राजाधिराजाय प्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे। स मे कामान् कामकामाय मह्यम्। कामेश्वरो वैश्रवणो ददातु। कुबेराय वैश्रवणाय महाराजाय नमः॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्, सार्वभौमः सार्वायुषान्तादापरार्धात्, पृथिव्यै समुद्रपर्यन्ताया एकराडिती॥ तदप्येष श्लोकोऽभिगीतो मरुतः परिवेष्टारो मरुत्तस्यावसन् गृहे। आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति॥

**ॐ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्। सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः॥**

नाना सुगन्धि पुष्पाणि यथा कालोद्भवानि च।
पुष्पाञ्जलिर्मया दत्तो गृहाण परमेश्वर!॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, पुष्पाञ्जलिं समर्पयामि।

प्रदक्षिणाम्

**ॐ ये तीर्थानि प्रचरन्ति सृकाहस्ता निषङ्गिणः। तेषाꣳ सहस्त्रयोजनेऽव धन्वानि तन्मसि॥**

यानि कानि च पापानि ज्ञाता-ज्ञात-कृतानि च।
तानि सर्वाणि नश्यन्ति प्रदक्षिणापदे पदे॥

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, प्रदक्षिणां समर्पयामि।

---

आचार्य 'ॐ यज्ञेन यज्ञ०', 'ॐ राजाधिराजाय०', 'ॐ विश्वतश्चक्षुरुत०' आदि मंत्रों और 'नाना सुगन्धि०' इस पौराणिक श्लोक का उच्चारण करके कर्ता से गणेश व अम्बा को पुष्पांजलि प्रदान करवायें। आचार्य 'ॐ ये तीर्थानि०' मन्त्र 'यानि कानि०' इस श्लोक का उच्चारण करके गणेश व अम्बा की प्रदक्षिणा कर्ता से करावें।

विशेषार्घ्यम्

रक्ष रक्ष गणाध्यक्ष! रक्ष त्रैलोक्य रक्षक!।
भक्तानां भयं कर्ता त्राता भव भवार्णवात्॥
द्वैमातुर कृपासिन्धो! षाण्मातुराग्रज प्रभो!।
वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद!॥
अनेन सफलार्घेण फलदोऽस्तु सदा नम।

ॐ भूर्भुवः स्वः गणेशाम्बिकाभ्यां नमः, विशेषार्घ्यं समर्पयामि।

प्रार्थना

ॐ विघ्नेश्वराय वरदाय सुरप्रियाय।
लम्बोदराय सकलाय जगद्धिताय।
नागाननाय श्रुतियज्ञ विभूषिताय।
गौरीसुताय गणनाथ नमो नमस्ते॥ १॥
भक्तार्तिनाशनपराय गणेश्वराय।
सर्वेश्वराय शुभदाय सुरेश्वराय।
विद्याधराय विकटाय च वामनाय।
भक्तप्रसन्नवरदाय नमो नमस्ते॥ २॥
नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः।
नमस्ते रुद्ररूपाय करिरूपाय ते नमः॥ ३॥
विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे।
भक्तप्रियाय देवाय नमस्तुभ्यं विनायक!॥ ४॥
लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय।
निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ ५॥
त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति फलप्रदेति।
विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश! वरदो भव नित्यमेव॥ ६॥

अनया पूजया गणेशाम्बिके प्रीयेतां न मम।

---

आचार्य 'रक्ष रक्ष०' से 'सदा नम' तक के श्लोकों का उच्चारण करते हुए कर्ता से गणेशाम्बिका को विशेषार्घ्य प्रदान करवाके 'ॐ विघ्नेश्वराय०' आदि श्लोकों का उच्चारण कर्ता से करवाके गणेशजी की प्रार्थना करवायें।

## कलशस्थापनपूजनम्

ततः कुङ्कुमादिना भूमौ पद्मं कृत्वा,

ॐ मही द्यौः पृथिवी च न ऽइमं यज्ञं मिमिक्षताम्। पिपृतान्नो भरीमभिः॥

इति भूमिं स्पृष्ट्वा।

ॐ ओषधयः समवदन्त सोमेन सह राज्ञा। यस्मै कृणोति ब्राह्मणस्तठं० राजन्पारयामसि॥

इति सप्तधान्यं विकिरेत्।

ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्त्रं धुक्ष्वोरुधारा पयस्वती पुनर्मांविशताद्-द्रयिः॥

इति सप्तधान्योपरि कलशं स्थापयेत्।

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कन्भसर्ज्जनी स्त्थो वरुणस्य ऽऋतसदन्नयसि वरुणस्य ऽऋतसदनमसि वरुणस्य ऽऋतसदनमासीद॥

इति कलशे जलं पूरयेत्।

ॐ त्वां गन्धर्वाऽअखनँस्त्वामिन्नद्रस्त्वां बृहस्पतिः। त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत॥

इति कलशे गन्धं क्षिपेत्।

---

कलशस्थापनपूजन—आचार्य रोली से भूमि पर अष्टदल कमल का निर्माण कर 'ॐ मही द्यौः०' इस मन्त्र का उच्चारण कर कर्ता से भूमि का स्पर्श करावे। 'ॐ ओषधयः समवदन्त०' इस मन्त्र का उच्चारण कर अष्टदलं कमल पर सप्तधान्य छोड़े, फिर 'ॐ आजिघ्र कलशं०' इस मन्त्र का उच्चारण कर सप्तधान्य के ऊपर कलश स्थापित करे। पुनः 'ॐ वरुणस्योत्तम्भनमसि०' इस मन्त्र द्वारा उस स्थापित कलश में जल भरे। इसके उपरान्त 'ॐ त्वां गन्धर्वा०' इस मन्त्र का उच्चारण कर चन्दन छोड़े।

**ॐ या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा। मनै नु बभ्रूणामहर्ठ० शतं धामानि सप्त च॥**

इति मन्त्रेण कलशे सर्वौषधी प्रक्षिपेत्।

**ॐ काण्डात् काण्डात् प्ररोहन्ती परुषः परुषस्परि। एवा नो दूर्वे प्रतनु सहस्त्रेण शतेन च॥**

इति कलशे दूर्वाङ्कुरान् क्षिपेत्।

**ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज ऽइत्किलासथयत्सनबथ पूरुषम्॥**

इति पञ्चपल्लवान्।

**ॐ पवित्रे स्थो वैष्णव्यौ सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः॥ तस्य ते पवित्रपते पवित्र पूतस्य यत्कामः पुने तच्छकेयम्॥**

इति मन्त्रेण कलशे पवित्रं क्षिपेत्।

**ॐ स्योना पृथिवि नो भवान्नृक्षरा निवेशनी। यच्छा नः शर्म्म सप्रथाः॥**

इति सप्तमृदः क्षिपेत्।

**ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वर्ठ० हसः॥**

इति कलशे पूगीफलं प्रक्षिपेत्।

---

'या ओषधी०' इस मन्त्र द्वारा कलश में सर्वोषधि छोड़े, 'ॐ काण्डात् काण्डात्०' इस मन्त्र द्वारा कलश में दूर्वा छोड़े। और 'अश्वत्थे वो०' इस मन्त्र का उच्चारण कर कलश में पंचपल्लव छोड़े दे। तदुपरान्त 'ॐ पवित्रेस्थो०' इस मन्त्र द्वारा कुशा की बनी हुई पवित्री कलश में छोड़े, और 'स्योना पृथिवि०' इस मन्त्र का उच्चारण कर सप्तमृतिका, 'ॐ याः फलिनीर्याः०' इस मन्त्र का उच्चारण कर सुपाड़ी छोड़े।

ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्। दधद्रत्नानि दाशुषे॥

इति पञ्चरत्नानि।

ॐ हिरण्यगर्भः समवर्त्त ताग्ग्रे भूतस्य जातः पतिरेक ऽआसीत्। स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥

इति कलशे हिरण्यं क्षिपेत्।

ॐ सुजातो ज्योतिषा सह शर्म वरूथमासदत्स्वः। वासो अग्ने विश्वरूपर्ठ० संव्ययस्व विभावसो॥

इति युग्मवस्त्रेण कलशं वेष्टयेत्।

ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जर्ठ० शतक्रतो॥

इति कलशोपरि पूर्णपात्रं न्यसेत्।

ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः। बृहस्पतिप्रसूतास्तानो मुञ्चन्त्वर्ठ०हसः॥

इति मन्त्रेण कलशोपरि नारिकेलफलं संस्थाप्य।

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ०स मा न आयुः प्रमोषीः॥

---

'ॐ परि वाजपतिः०' इस मन्त्र का उच्चारण कर पंचरत्न छोड़े। फिर 'ॐ हिरण्यगर्भः०' इस मन्त्र का उच्चारण कर स्थापित कलश में द्रव्य छोड़े, पुनः 'ॐ सुजातो ज्योतिषा०' इस मन्त्र का उच्चारण करते हुए कलश को चारों ओर से दो वस्त्रों द्वारा लपेटे। तदुपरान्त ॐ पूर्णा दर्वि परापत० इस मन्त्र का उच्चारण कर कलश के ऊपर पूर्णपात्र में अक्षत भरकर उसके ऊपर रखें, 'ॐ याः फलिनीर्या०' इस मन्त्र का उच्चारण कर उस कलश के ऊपर लाल वस्त्र लपेट कर नारिकेल रखे। फिर 'ॐ तत्त्वा यामि ब्रह्मणा०' मन्त्र और उसके आगे।

अस्मिन् कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि। ॐ अप्पतये वरुणाय नमः। इति [1]पञ्चोपचारैर्वरुण सम्पूज्य, ततो ततस्तत्रैव देवता आवाहयेत्।

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः।
मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः॥ १॥
कुक्षौ तु सागराः सप्त सप्तद्वीपा च मेदिनी।
अर्जुनी गोमती चैव चन्द्रभागा सरस्वती॥ २॥
कावेरी कृष्णवेणा च गङ्गा चैव महानदी।
तापी गोदावरी चैव माहेन्द्री नर्मदा तथा॥ ३॥
नदाश्च विविधा जाता नद्यः सर्वास्तथापराः।
पृथिव्यां यानि तीर्थानि कलशस्थानि तानि वै॥ ४॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः॥ ५॥
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः॥ ६॥
अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा।
आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः॥ ७॥

कर्ता स्वहस्ते अक्षतान् गृहीत्वा, 'ॐ मनो जूतिर्जु०' इति मन्त्रेण पठेत्।

---

'अस्मिन् कलशे०' इस वाक्य का उच्चारण कर उस कलश में अंग सहित सपरिवार, सायुध, सशक्तिकः वरुण का आवाहन और स्थापन करे। पुनः 'ॐ अप्पतये वरुणाय नमः' से वरुण का पंचोपचार से पूजन करे। 'कलाशस्य मुखे विष्णु' से प्रारम्भ कर 'दुरितक्षयकारिकाः' तक के सात श्लोकों का क्रम से उच्चारण कर उस कलश में गंगा आदि नदियों का आवाहन करे। इसके पश्चात् कर्ता अपने दायें हाथ में अक्षत लेकर 'ॐ मनो जुर्तिजु०' से प्रारम्भ कर विष्ण्वाद्यावाहित–देवताभ्यो नमः तक के वाक्यों का उच्चारण करें।

---

१. गन्ध–पुष्पौ धूप–दीपौ नैवेद्येति पञ्चकः। पञ्चोपचारनाख्यातं धूपेत्तत्त्वविद्बुधः॥

अस्मिन् कलशेवरुणाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवन्तु। ॐ वरुणाद्यावाहितदेवताभ्यो नमः। विष्ण्वाद्यावाहितदेवताभ्यो नमः, इति वा। आसनार्थेऽक्षतान् सम०। पादयोः पाद्यं सम०। हस्तयोः अर्घ्यं सम०। आचमनं सम०। पञ्चामृतस्नानं सम०। शुद्धोदकस्नानं सम०। स्नानाङ्गाचमनं सम०। वस्त्र सम०। आचमनं सम०। यज्ञोपवीतं सम०। आचमनं सम०। उपवस्त्रं सम०। आचमनं सम०। गन्धं सम०। अक्षतान् सम०। पुष्पमालां सम०। नानापरिमलद्रव्याणि सम०। धूपमाघ्रापयामि। दीपं दर्श०। हस्तप्रक्षा०। नैवेद्यं सम०।आच० सम०।मध्ये पानीयम्।उरत्तापो० च सम०।ताम्बूलं सम०।पूगीफलं सम०। कृतायाः पूजायाः षाड्गुण्यार्थे द्रव्यदक्षिणां सम०। आर्तिक्यं सम०। मन्त्रपुष्पाञ्जलिं सम०। प्रदक्षिणां सम०। नमस्कारं सम०। अनया पूजया वरुणाद्यावाहितदेवताः प्रीयन्तां न मम।

कलश–प्रार्थनाः—देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ! विधृतो विष्णुना स्वयम्॥ १॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः॥ २॥ शिवः स्वयं त्वमेवाऽसि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्राविश्वेदेवाः सपैतृकाः॥ ३॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः। त्वत् प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव!। सान्निध्यं कुरु देवेश! प्रसन्नो भव सर्वदा॥ ४॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय। सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते॥ ५॥ पाशपाणे! नमस्तुभ्यं पद्मिनीजीवनायक!। पुण्याहवाचनं यावत् तावत्त्वं सन्निधो भव॥ ६॥

---

'अस्मिन् कलशे' से 'नमः' तक का उच्चारण करके पुनः कलश के ऊपर अक्षत छिड़के, फिर 'आसनार्थे अक्षतान्' से 'प्रीयन्तां न मम' तक का उच्चारण कर उपरोक्त प्रत्येक वाक्यों से वरुणाद्यावाहित देवताओं का षोडशोपचारों से पूजन करें। कलशप्रार्थना का भावार्थ—तदनन्तर देवता एवं असुरों द्वारा समुद्रमंथन में भगवान् विष्णु स्वयं कुम्भ को लेकर निकले। उस जल में सभी तीर्थ और समस्त देवता स्थित हैं। तुम्हारे सब प्राणी, सब प्राण, शिव, स्वयं ही विष्णु, ब्रह्मा, आदित्य, वसुगण, रुद्रगण, विश्वेदेव ये सभी कार्य के फल को देनेवाले स्थित हैं। आपके प्रासाद से इस यज्ञ को उस जल द्वारा करते हैं। इसलिए हे देव! इसमें आप निवास करो एवं सर्वदा प्रसन्न रहो॥ १–४॥ स्फटिक की तरह कान्ति, सफेद मालाधारी रूप एवं पाश को हाथ में धारण करनेवाले शनि और जल के स्वामी आपको बारम्बार नमस्कार है। हे पाशपाणे! हे पद्मिनी जीवनायक! आपको नमस्कार है। जब तक पुण्याहवाचन कार्य हो, तब तक आप इस कलश में स्थित रहें॥ ५–६॥

## पुण्याहवाचनम्

अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं स्वाञ्जलौ धारयित्वा स्वमूर्ध्ना आशिषः प्रार्थयेत्।

कर्ता—दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च।
तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु॥

विप्राः—अस्तु दीर्घमायुः।

**ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः। अतो धर्माणि धारयन्॥** (संसार की रक्षा करने वाले श्रीहरि ने अग्नि, वायु एवं आदित्य नाम वाले पदों को चलाया और इसी पदत्रय से धर्मकार्यों को धारण किया।)

तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु—इति कर्ता।

पुण्यं पुण्याहं दीर्घमायुरस्तु—इति द्विजाः।

एवं द्विरपरं शिरसि भूमौ निधाय।

कर्ता ब्राह्मणानां हस्ते—ॐ शिवा आपः सन्तु इति दद्यात्। सन्तु शिवा आपः। इति ब्राह्मणाः। एवं सर्वत्र वचनोत्तरं दद्युः।

---

पुण्याहवाचन—कर्ता दोनों घुटनों को भूमि पर मोड़कर कमल के तुल्य अपनी अंजली को सिर पर रखे। और दाहिने हाथ में स्वर्ण आदि के जलपूर्ण कलश को अपने शिर से स्पर्श कर स्वयं आशीर्वाद प्राप्त करने हेतु ब्राह्मणों से प्रार्थना करे।

कर्ता 'दीर्घा नागा०' से प्रारम्भ कर 'दीर्घमायुरस्तु' तक कहे। ब्राह्मण कहें—'अस्तु दीर्घमायुः।' पुनः कर्ता 'त्रिणि पदा०' से दीर्घमायुरस्तु तक का उच्चारण करे।

पुनः ब्राह्मण कहें, पुण्यं पुण्याहं दीर्घमायुरस्तु। इस क्रम द्वारा दो बार मस्तक से उस कलश का स्पर्श कर यथास्थान रखे।

पुनः कर्ता ब्राह्मणों के हाथ में 'शिवा आपः सन्तु' का उच्चारण कर जल दें। ब्राह्मण कहे—'शिवा आपः' इस क्रम द्वारा सभी स्थानों पर कर्ता के कहने पर ब्राह्मण उत्तर—प्रत्युत्तर प्रदान करे।

कर्ता—सौमनस्यमस्तु इति पुष्पम्। विप्राः—अस्तु सौमनस्यम्।

कर्ता—'अक्षतं चाऽरिष्टं चाऽस्तु' इत्यक्षतान्। विप्राः—अस्त्वक्षतमरिष्टं च। कर्ता—गन्धाः पान्तु इति गन्धम्। विप्राः—सुमङ्गल्यं चाऽस्तु।

कर्ता—अक्षताः पान्तु। विप्राः—आयुष्यमस्तु। कर्ता—पुष्पाणि पान्तु। विप्राः—सौश्रियमस्तु। कर्ता—सफलताम्बूलानि पान्तु। विप्राः—ऐश्वर्यमस्तु।

कर्ता—दक्षिणाः पान्तु। विप्राः—बहुदेयं चास्तु। कर्ता—पुनरत्राऽऽपः पान्तु। विप्राः—स्वर्चितमस्तु। कर्ता—दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चाऽऽयुष्यं चाऽस्तु। विप्राः—तथाऽस्तु। कर्ता—यं कृत्वा सर्ववेद-यज्ञ-क्रियाकरण-कर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोङ्कार-मादिं कृत्वा, ऋग्यजुः सामाऽथर्वाऽऽशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये। विप्राः—वाच्यताम्।

---

कर्ता—'सौमनस्यमस्तु' कहकर ब्राह्मणों के हाथ में पुष्प दे। ब्राह्मण कहे—'अस्तु सौमनस्यम्'। कर्ता—'अक्षतं चाऽरिष्टं चाऽस्तु' कहकर अक्षत देवे। ब्राह्मण कहें—'अस्त्वक्षतमरिष्टं च'।

पुनः कर्ता—'गन्धाः पान्तु' कहकर ब्राह्मणों के माथे पर चन्दन लगावें। ब्राह्मण कहें—'सुमंगल्यं चाऽस्तु।' कर्ता 'अक्षताः पान्तु' का उच्चारण कर ब्राह्मणों के हाथ में अक्षत दे। ब्राह्मण कहे—'आयुष्यमस्तु'। कर्ता ब्राह्मणों के हाथ में 'पुष्पाणि पान्तु' के द्वारा पुष्प प्रदान करे।

तदुपरान्त कर्ता 'सफल—ताम्बूलानि पान्तु' का उच्चारण कर ब्राह्मणों को फल और ताम्बूल देवे। ब्राह्मण कहें—'ऐश्वर्यमस्तु'।

कर्ता—'दक्षिणाः पान्तु' का उच्चारण कर ब्राह्मणों को दक्षिणा दे। ब्राह्मण कहें—'बहुदेयं चाऽस्तु'। कर्ता—'पुनरत्रापः पान्तु' का उच्चारण कर जल दे। ब्राह्मण कहें—'स्वर्चितमस्तु।' पुनः कर्ता—'दीर्घमायु०' से 'चायुष्यं चाऽस्तु' तक कहे। ब्राह्मण कहें—'तथाऽस्तु'। कर्ता—'यं कृत्वा सर्ववेद' से 'पुण्यं पुण्याहं वाचयिष्ये' तक का उच्चारण करे। कर्ता के कहने पर ब्राह्मण उत्तर में 'वाच्यताम्' और

करोतु स्वस्ति ते ब्रह्मा स्वस्ति चाऽपि द्विजातयः।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति सर्वदा॥ १॥
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः।
तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु नित्यशः॥ २॥
स्वस्ति तेऽस्तु द्विपादेभ्यश्चतुष्पादेभ्य एव च।
स्वस्त्यस्त्वापादकेभ्यश्च सर्वेभ्यः स्वस्ति ते सदा॥ ३॥
स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा।
करोतु स्वस्ति वेदादिर्नित्यं तव महामखे॥ ४॥
लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ।
असितो देवलश्चैव विश्वामित्रस्तथाऽङ्गिराः॥ ५॥
वशिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते सदा।
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः॥ ६॥
स्वस्ति तेऽद्य प्रयच्छन्तु कार्त्तिकेयश्च षण्मुखः।
विवस्वान् भगवान् स्वस्ति करोतु तव सर्वदा॥ ७॥
दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः।
अधस्ताद् धरणीं चाऽसौ नागो धारये हि यः॥ ८॥
शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु।

ॐ द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्टादृतुभिरिष्यत॥ सविता त्त्वा सवानाꣳ सुवतामग्निर्गृहपतीनाꣳ सोमो वनस्पतीनाम् बृहस्पतिर्वाच इन्द्रो ज्यैष्ठाय रुद्रः पशुभ्यो मित्रः सत्यो वरुणो धर्मपतीनाम्॥ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्। यो बिभर्ति दाक्षायणꣳ हिरण्यः स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः॥ उच्चा ते जातमन्धसो दिविसद्भूम्याददे। उग्रꣳ शर्म्म महिश्रवः॥ उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ२॥ इयक्षते॥ इत्येता ऋचः पुण्याहे ब्रूयात्॥ १-५॥ इत्येता ऋचः पुण्याहे ब्रूयात्।

---

'करोतु स्वस्ति ते ब्रह्मा' से 'अभि देवां इयक्षते' तक श्लोक का उच्चारण करें। 'ॐ द्रविणोदा०' से आरम्भ कर पाँच मन्त्रों का उच्चारण करें।

व्रत-जप-नियम-तपः-स्वाध्याय-क्रतु-शम-दम-दया-दान-विशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्। इति कर्ताः। समाहितमनसः स्मः इति ब्राह्मणाः। प्रसीदन्तु भवन्तः इति कर्ताः। प्रसन्नाः स्मः इति ब्राह्मणाः।

ततः कर्ता ब्रूयात्—ॐ शान्तिरस्तु इत्यादि। 'अस्त्वि'ति द्विजाः। एवं वचनं प्रतिवचनं सर्वत्र दद्युः। ॐ शान्तिरस्तु। ॐ पुष्टिरस्तु। ॐ तुष्टिरस्तु। ॐ वृद्धिरस्तु। ॐ अविघ्नमस्तु। ॐ आयुष्यमस्तु। ॐ आरोग्यमस्तु। ॐ शिवमस्तु। ॐ शिवं कर्माऽस्तु। ॐ कर्मसमृद्धिरस्तु। ॐ धर्मसमृद्धिरस्तु। ॐ वेदसमृद्धिरस्तु। ॐ शास्त्रसमृद्धिरस्तु। ॐ धन-धान्यसमृद्धिरस्तु। ॐ इष्टसम्पदस्तु। ( बहिः ) ॐ अरिष्टनिरसनमस्तु। यत्पापं रोगोऽशुभमकल्याणं तत् दूरे प्रतिहतमस्तु। ( अन्तः ) ॐ यच्छ्रेयस्तदस्तु। उत्तरे कर्मणि निर्विघ्नमस्तु। उत्तरोत्तर-महरहरभिवृद्धिरस्तु। उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम्। ॐ तिथि-करण-मुहूर्त-नक्षत्र-ग्रह-लग्नाधि-देवताः प्रीयन्ताम्। तिथिकरणे-समुहूर्ते-सनक्षत्रे सग्रहे-सलग्ने-साधिदैवते प्रीयन्ताम्। ॐ तिथि-करणे स-मुहूर्ते स-नक्षत्रे स-ग्रहे स-लग्ने साधिदैवते प्रीयेताम्। ॐ दुर्गा पाञ्चाल्यौ प्रीयेताम्। ॐ अग्निपुरोगाः विश्वेदेवाः प्रीयन्ताम्। ॐ इन्द्रपुरोगाः मरुद्गणाः प्रीयन्ताम्। ॐ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम्। ॐ माहेश्वरीपुरोगा मातरः प्रीयन्ताम्। ॐ अरुन्धती पुरोगाः एकपत्न्यः प्रीयन्ताम्। ॐ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम्। ॐ ब्रह्मपुरोगाः सर्वे श्रीसरस्वत्यौ प्रीयेताम्। ॐ श्रद्धामेधे प्रीयेताम्। ॐ भगवती कात्यायनी प्रीयताम्। ॐ भगवती माहेश्वरी प्रीयताम्। ॐ भगवती ऋद्धिकरी प्रीयताम्। ॐ भगवती वृद्धिकरी प्रीयताम्। ॐ भगवती पुष्टिकरी प्रीयताम्। ॐ भगवती तुष्टिकरी प्रीयताम्। ॐ भगवन्तौ विघ्नविनायकौ प्रीयेताम्। ॐ सर्वाः कुलदेवताः प्रीयन्ताम्। ॐ सर्वाः ग्रामदेवताः प्रीयन्ताम्। ॐ सर्वाः इष्टदेवताः प्रीयन्ताम्। ( बहिः ) ॐ हताश्च ब्रह्मद्विषः। ॐ हताश्च परिपन्थिनः।

---

पुनः कर्ता—'व्रत-जप-नियम-तपः' से 'मनः समाधीयताम्' तक का उच्चारण करें। इसके उपरान्त ब्राह्मण कहें—'समाहितमनसः स्मः'। फिर कर्ता कहे—'प्रसीदन्तु भवन्तः'। ब्राह्मण कहें—'प्रसन्ना स्मः।' इसके पश्चात् कर्ता अपने बायें हाथ में अक्षतपात्र लेकर दायें हाथ से 'ॐ शान्तिरस्तु'—

ॐ हताश्च विघ्नकर्त्तारः। ॐ शत्रवः पराभवं यान्तु। ॐ शाम्यन्तु घोराणि। ॐ शाम्यन्तु पापानि। ॐ शाम्यन्त्वीतयः। ॐ शाम्यन्तूपद्रवा। (अन्तः) ॐ शुभानि वर्द्धन्ताम्। ॐ शिवा आपः सन्तु। ॐ शिवा ऋतवः सन्तु। ॐ शिवा अग्नयः सन्तु। ॐ शिवा आहुतयः सन्तु। ॐ शिवा वनस्पतयः सन्तु। ॐ शिवा अतिथयः सन्तु। ॐ अहोरात्रे शिवे स्याताम्।

**ॐ निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां। योगक्षेमो नः कल्पताम्।**

शुक्रा - ऽङ्गावारक - बुध - बृहस्पति - शनैश्चर - राहु - केतु - सोम-सहितादित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम्। ॐ भगवान् नारायणः प्रीयन्ताम्। ॐ भगवान् पर्जन्यः प्रीयन्ताम्। ॐ भगवान् स्वामी महासेनः प्रीयन्ताम्। पुरोऽनुवाक्या यत्पुण्यं तदस्तु। याज्या यत्पुण्यं तदस्तु। वषट् कारेण यत्पुण्यं तदस्तु। प्रातः सूर्योदये यत्पुण्यं तदस्तु। एतत्कल्याणयुक्तं पुण्यं पुण्याहं वाचयिष्ये, इति कर्ता। ॐ वाच्यतामि 'ति ब्राह्मणाः।

ॐ ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम्।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः॥

भो ब्राह्मणाः! मया क्रियामाणस्य होमात्मक-श्रीसन्तानगोपाला-नुष्ठानस्यकर्मणः पुण्याहं भवन्तो ब्रुवन्तु, इति कर्ताः।

ॐ पुण्याहम्, ॐ पुण्याहम्, ॐ पुण्याहम्। इति ब्राह्मणाः।

ॐ अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु इति कर्ता। ॐ पुण्याहम्, ॐ पुण्याहम्, ॐ पुण्याहम्। इति ब्राह्मणाः एवं वचन प्रतिवचनं च त्रिःपठित्वा।

---

से लेकर 'पुण्यं पुण्याहं वाचयिष्ये' तक के वाक्यों का उच्चारण कर कलश पर दो-दो दाना अक्षत चढ़ावें। इन वाक्यों के मध्य में 'ॐ अरिष्टनिरसन-मस्तु' से लेकर 'तद्दूरे प्रतिहतमस्तु' तथा 'ॐ हताश्च ब्रह्मादिषु' से 'ॐ शाम्यन्तू-पद्रवाः' तक का उच्चारण कर अलग-अलग कसोरे में अक्षत छोड़ें। ब्राह्मण-'ॐ वाच्यताम्' इस प्रकार कहें। पुनः कर्ता-'ॐ ब्राह्मं पुण्यमहर्यच्च०' से 'भवन्तो ब्रुवन्तु' तक तीन बार बोले। ब्राह्मण भी तीन बार 'ॐ पुण्याहं पुण्याहं पुण्याहम्' यह कहें।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसाधियः।
पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा॥

इति ब्राह्मणाः।

पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम्।
ऋषिभिः सिद्ध-गन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः॥

भो ब्राह्मणाः! मया क्रियामाणस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानस्यकर्मणः कल्याणं भवन्तो ब्रुवन्तु, इति कर्ता। ॐ कल्याणम्, ॐ कल्याणम्, ॐ कल्याणम्।

ॐ यथेमां वाचं कल्याणीमावदानि जनेभ्यः। ब्रह्म राजन्याभ्यार्ठ० शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृद्ध्यतामुप मादो नमतु॥

इति ब्राह्मणाः पठेयुः।

सागरस्य च या लक्ष्मीर्महाक्ष्म्यादिभिः कृता।
सम्पूर्णा सुप्रभावा च तामृद्धिं ब्रुवन्तु नः॥

भो ब्राह्मणाः! मया क्रियमाणस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानस्यकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु, इति कर्ता। ॐ कर्म ऋध्यताम्, ॐ कर्म ऋध्यताम्, ॐ कर्म ऋध्यताम्। इति ब्राह्मणाः।

ॐ सत्रस्य ऋद्धिरस्यगन्मज्योतिरमृता अभूम।
दिवं पृथिव्या अद्ध्यारु हामाविदाम देवान्त्स्वर्ज्योतिः॥

स्वस्तिस्तु याऽविनाशाख्या पुण्य-कल्याण-वृद्धिदा।
विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः॥

भो ब्राह्मणाः! मया क्रियमाणस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानाख्यकर्मणे स्वस्तिं भवन्तो ब्रुवन्तु, इति कर्ता।

---

'ॐ पुनन्तु मा०' इस मन्त्र का उच्चारण करें। पुनः कर्ता के 'पृथिव्यामुद्०' से 'भवन्तो ब्रुवन्तु' पर्यन्त कहने पर सभी वरण किये हुए ब्राह्मण तीन बार 'ॐ कल्याणम्' कहें। 'ॐ यथेमां वाचम्०' इसका उच्चारण करें। उपरान्त कर्ता 'ॐ सागरस्य तु या०' से 'भवन्तो ब्रुवन्तु' तक कहे। ब्राह्मणगण 'ॐ कर्म ऋध्यताम्' इसका तीन बार उच्चारण करें और 'ॐ सत्रस्य ऋद्धि०' मन्त्र को पढ़े। पुनः कर्ता के 'स्वस्तिस्तु या०' से 'भवन्तो ब्रुवन्तु' तक का उच्चारण करे।

ॐ आयुष्मते स्वस्ति। ॐ आयुष्मते स्वस्ति। ॐ आयुष्मते स्वस्ति। इति ब्राह्मणाः।

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥

समुद्रमथनाज्जाता जगदानन्दकारिका।
हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः॥

भो ब्राह्मणाः! मया क्रियमाणस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानख्यस्यकर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु, इति कर्ता। ॐ अस्तु श्रीः, ॐ अस्तु श्रीः, ॐ अस्तु श्रीः। इति ब्राह्मणाः।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म ऽइषाण सर्वलोकं म इषाण॥

मृकण्डसूनोरायुर्यद्ध्रुव - लोमशयोस्तथा।
आयुषा तेन संयुक्ता जीवेम शरदः शतम्॥

इति कर्ता। शतं जीवन्तु भवन्तः-इति ब्राह्मणाः।

ॐ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्। पुत्रासो यत्र पितरो भवन्ति मा नो मध्यारीरिषतायुर्गन्तोः॥

शिव-गौरी-विवाहे या या श्रीरामे नृपात्मजे।
धनदस्य गृहे या श्रीरस्माकं साऽस्तु सद्मनि॥

---

कहने पर सभी ब्राह्मण 'ॐ आयुष्मते स्वस्ति' कहकर 'ॐ स्वस्ति न इन्द्रो०' इस वैदिक मन्त्र का उच्चारण करें। पुनः कर्ता द्वारा 'समुद्रमथनाज्जाता०' से 'भवन्तो ब्रुवन्तु' कहने पर सभी ब्राह्मण 'ॐ अस्तु श्रीः' तीन बार कहें। पुनः 'ॐ श्रीश्च ते०' इस मन्त्र का उच्चारण करें। पुनः कर्ता 'मृकण्डसुनो०' से 'शरदः शतम्' तक कहे। इसके उत्तर में सभी ब्राह्मण 'शतं जीवन्तु भवन्तः' इस वाक्य का उच्चारण कर 'ॐ शतमिन्नु शरदो०' इस मन्त्र को कहें। कर्ता—'शिव—गौरी विवाहे०' से 'अस्तु सद्मनि' तक के श्लोक का उच्चारण करे।

इति कर्ता। ॐ अस्तु श्रीः इति ब्राह्मणाः।

ॐ मनसः काममाकूतिं वाचः सत्यमशीय।
पशूनार्ठ० रूपमन्नस्य रसो यशः श्रीः श्रयतां मयि स्वाहा॥

प्रजापतिर्लोकपालो धाता ब्रह्मा च देवराट्।
भगवाञ्छाश्वतो नित्यं नो वै रक्षन्तु सर्वतः॥

ॐ भगवान् प्रजापतिः प्रीयताम्।

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयर्ठ०स्याम पतयो रयीणार्ठ० स्वाहा॥

आयुष्मते स्वस्तिमते यजमानाय दाशुषे।
श्रिये दत्ताशिषः सन्तु ऋत्विग्भिर्वेदपारगैः॥

इति कर्ता। आयुष्मते स्वस्ति। इति ब्राह्मणाः।

ॐ प्रति पन्थामपद्महि स्वस्ति गामनेहसम्।
येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु॥

स्वस्तिवाचनसमृद्धिरस्तु।

कृतस्य स्वस्तिवाचनकर्मणः समृध्यर्थं स्वस्तिवाचकेभ्यो विप्रेभ्यो इमां दक्षिणां विभज्य दातुमहमुत्सृज्ये।

---

प्रत्येक वचन में सभी ब्राह्मण 'ॐ अस्तु श्रीः' कहें और 'ॐ मनसः काममाकूतिं०' इस मन्त्र का उच्चारण करें। पुनः कर्ता के द्वारा 'प्रजापतिर्लोकपालो०' से 'नो वै रक्षन्तु सर्वतः' तक का श्लोक पढ़ने पर 'ॐ भगवान् प्रजापतिः प्रीयताम्'। इस वाक्य का उच्चारण ब्राह्मण करें और 'ॐ प्रजापते न त्वदेतां०' से 'रयीणार्ठ० स्वाहा०' तक के वैदिक मन्त्र का उच्चारण करें। कर्ता के द्वारा 'आयुष्मते स्वस्तिमते०' इस श्लोक का उच्चारण करने पर सभी ब्राह्मण 'ॐ आयुष्मते स्वस्ति' यह कहें और 'प्रति पन्था०' से 'स्वस्तिवाचनसमृद्धिरस्तु' पर्यन्त पढ़े। इसके पश्चात् कर्ता 'कृतस्य स्वस्तिवाचनकर्मणः' से 'मृत्सृजे' तक का संकल्प वाक्य पढ़कर स्वस्तिवाचन करने वाले ब्राह्मणों को यथाशक्ति दक्षिणा प्रदत्त करे।

---

## अभिषेकः

आचार्य सहित सभी ब्राह्मण हाथ में कुशादि लेकर कलश के जल को किसी चौड़े मुख के पात्र में लेकर दूर्वा और पञ्चपल्लव द्वारा उस जल के द्वारा उत्तराभिमुख कम्बलासन पर बैठे हुए कर्ता व उसके वामभाग में बैठी हुई धर्मपत्नी सहित परिवार के सदस्यों का 'ॐ देवस्य त्वा सवितुः' इस प्रथम मंन्त्र से प्रारम्भ कर 'ॐ यतोयतः समीहसे' तक के इकतीस मन्त्रों का उच्चारण करते हुए अभिषेक करें–

**ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ॥ १॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ २॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्याम्। अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसा-याभिषिञ्चामि सरस्वत्यै भैषज्येन वीयर्यायान्नाद्यायाभि-षिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि॥ ३॥**

---

भावार्थ–हे कर्ता! सविता देव की अनुज्ञा में विद्यमान मैं अश्विनौ की बाहुओं एवं पूषा के हाथों के द्वारा नियमन करनेवाली सरस्वती से नियम्य धन में प्रतिष्ठापित करता हूँ। अब तुम अमुक नाम को मैं बृहस्पति के साम्राज्य से अभिसिंचित करता हूँ॥ १ ॥ सवितादेव की अनुज्ञा में वर्तमान में अश्विनौ की बाहुओं, पूषा के हाथों से, सरस्वती की वाणी, प्रजापति के नियम एवं अग्नि के साम्राज्य के साथ तुमको सिंचित करता हूँ॥ २ ॥ हे कर्ता! सवितादेव की अनुज्ञा में वर्तमान में मैं अश्विनौ की बाहुओं तथा पूषा के हाथों से तुम्हें आसिंचित करता हूँ। मैं तुम्हें अश्विनौ के वैद्यकर्म के कारण तेज एवं ब्रह्मवर्चस् की प्राप्ति के लिये आसिंचित करता हूँ। सरस्वती के भैषज्य से मैं तुम्हें वीर्य और अन्य एवं अन्य भोग की शक्ति के लिये आसिंचित करता हूँ। (देवराज) इन्द्र के इन्द्रिय बल से बल के लिये, लक्ष्मी के लिये और यश के लिये आसिंचित करता हूँ॥ ३ ॥

शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्चश्मश्रूणि। राजा मे प्राणो अमृतर्ठ० सम्राट् चक्षुर्विराट्श्रोत्रम्॥ ४॥ जिह्वा मे भद्रं वाङ् महो मनो मन्युः स्वराड् भामः। मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः॥ ५॥ बाहू मे बलमिन्द्रियर्ठ० हस्तौ मे कर्म वीर्यम्। आत्मा क्षत्रमुरो मम॥ ६॥ पृष्ठीर्मे राष्ट्रमुदरमर्ठ०सौ ग्रीवाश्चश्रोणी। ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः॥ ७॥ नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत्। आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः। जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः॥ ८॥ प्रति क्षत्रे प्रति तिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु। प्रत्यङ्गेषु प्रति तिष्ठाम्यात्मन् प्रति प्राणेषु प्रति तिष्ठामि पुष्टे प्रति द्यावापृथिव्योः प्रति तिष्ठामि यज्ञे॥ ९॥

---

भावार्थ—मेरा सिर श्रीयुक्त हो। मेरा मुख यशोकृत हो। केश और दाढ़ी दीप्ति से युक्त हो। मेरा प्राण राजा तथा अमृत स्वरूप होवे। नेत्र सम्राट् हो तथा कर्ण विराट हो॥ ४॥ मेरी जिह्वा कल्याणकारी हो, मेरी वाणी महती हो, मन मन्युपूर्ण हो। क्रोध स्वराट् हो। अंगुलियाँ मोद व अंग प्रमोद हो। शत्रु को अभिभूत करने का बल मेरा मित्र हो॥ ५॥ मेरी भुजाओं में इन्द्र का बल हो, मेरे हाथों में वीरकर्म हो, मेरी आत्मा और हृदय क्षत्रियकर्म से व्यापक हो॥ ६॥ मेरी पीठ एक देश के सदृश सर्वाधार हो। मेरा पेट, मेरे कंधे, मेरी गर्दन, मेरा गला, मेरी कमर, मेरी जांघ, मेरी हड्डियाँ, मेरे मुष्टिप्रदेश एवं मेरी जानुएँ सर्वाङ्ग प्रजा के तुल्य होवे॥ ७॥ मेरी नाभि चित्त, गुदा विज्ञान, योनि पूजा, अण्डकोष, आनन्दनन्द एवं भग शिश्न में सौभाग्य हों। मैं अपनी जंघाओं व पैरों के द्वारा प्रजा में राजा होकर प्रतिष्ठित हुआ हूँ॥ ८॥ मैं क्षत्रिय जाति, राष्ट्र, अश्वों, गायों, अंग–प्रत्यंगों, आत्मा, प्राणों समृद्धि, द्यावा–पृथिवी एवं यज्ञ में प्रतिष्ठित होता हूँ॥ ९॥

त्रया देवा एकादश त्रयस्त्रिर्ठ० शाः सुराधसः। बृहस्पति-पुरोहिता देवस्य सवितुः सवे। देवा देवैरबन्तु मा॥ १०॥ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूर्ठ०षि सामभिः सामान्यृग्भिर्ऋचः पुरोऽनु वाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्कारैर्वषट्कारा आहुति-भिराहुतयो मे कामान्त् समर्द्धयन्तु भूः स्वाहा॥ ११ ॥ पयः पृथिव्यां पय ओषधीषुपयो दिव्यन्तरिक्षे पयो धाः॥ पयस्वतीः प्रदिशः सन्तु मह्यम्॥ १२॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्त्रोतसः। सरस्वती तु पञ्चधा सो देशे भवत्सरित्॥ १३॥ वरुणस्योतम्भनमसि वरुणस्य स्कं भसर्जनीस्थो वरुणस्य ऽऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद॥ १४॥

---

भावार्थ–सुधन सम्पन्न तीन देव, ग्यारह व तैंतीस हैं। बृहस्पति पुरोहित वाले वे देवता सविता देव की अनुज्ञा में वर्तमान रहते हैं। द्योतमान वे देवता मुझे सम्पूर्ण दुःखों से बचावे॥ १०॥ प्रथम देवता द्वितीय देवों से, द्वितीय देवता तृतीय देवों से, तृतीय देवता सत्य से, सत्य यज्ञ से, यज्ञ यजुषों से, यजुष् सामों से साम ऋचाओं से, ऋचाएँ पुरोअनुवाक्यों से, पुरोअनुवाक्या याज्याओं से, आज्याएँ वषट्कारों से, वषट्कार आहुतियों से संगत होकर मेरी वृद्धि करे। आहुतियाँ मेरे सभी मनोरथों को समृद्ध बनावें। 'ॐ भूः' यह आहुति मन्त्र है॥ ११॥ हे अग्ने! तुम पृथ्वी में रस स्थापित करो, औषधियों में, अन्तरिक्ष में एवं द्युलोक में जल को स्थापित करो। हे अग्ने! तुम्हारी कृपा से यह सब प्रकृष्ट दिशाएँ मेरे लिये रसयुक्त होवे॥ १२॥ अपनी सहायक नदियों के साथ पाँच नदियाँ सरस्वती नदी में संगम करती हैं। पाँच धाराओं में बहनेवाली वह सरस्वती अपने प्रवाह प्रदेश में एक ही सरित हो गई।॥ १३॥ हे सैलो! तुम सोम की गाड़ी को रोकनेवाली हो। वरणीय सोम के वहन करने के शकट में जुते बैलों को रोकनेवाली हो। तुम सोम के यज्ञ में बैठने का ही स्थान हो। हे मृगचर्म! तुम सोम के वास्तविक बैठने का स्थान हो। तुम सोम के उचित बैठने के स्थान मचिया पर प्रतिष्ठित होओ॥ १४॥

पुनन्तु मा पितरः सोम्यासः पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः। पवित्रेण शतायुषा। पुनन्तु मा पितामहाः पुनन्तु प्रपितामहाः॥ पवित्रेण शतायुषा विश्वमायुवर्यश्नवै॥ १५॥ अग्न आयूर्ठ०सि पवस आ सुवोर्जमिषं च नः। आरे बाधस्य दुच्छुनाम्॥ १६॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥ १७॥ पवित्रेण पुनीहि मा शुक्रेण देव धीद्यत्। अग्ने क्रत्वा क्रतूँ२॥ रनु॥ १८॥ यते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्मतेन पुनातु मा॥ १९॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा॥ २०॥ उभाभ्यां देव सवितः पवित्रेण सवेन च। मां पुनीहि विश्वतः॥ २१॥

---

भावार्थ—सोमप्रिय पितृजन मुझे पवित्र करे। पितामह मुझे पवित्र करें। शत आयुष्य वाले पवित्र के द्वारा प्रपितामह मुझे पवित्र करें। पितामह, प्रपितामह मुझे शतायुष पवित्र से पवित्र करें। उनके द्वारा पवित्रीकृत मैं अपनी पूर्ण आयु प्राप्त करूँ।॥ १५॥ हे अग्ने! तुम स्वयं ही आयुष्यप्रापक कर्मों को हमसे करवाते हो, तुम हमारे लिये आयुष प्रापक बल अन्न को लाओ। दुष्ट प्रवृत्तिवाले व्यक्तियों को तुम हमसे दूर ही रखो॥ १६॥ देवजन मुझे शुद्ध करे। वे मन के द्वारा मेरी बुद्धि को पवित्र करे। सर्वभूत मुझे पवित्र करे तथा उत्पन्नमात्र को जाननेवाले अग्निदेव! तुम मुझे (पूर्णत:) पवित्र करो।॥ १७॥ हे अग्निदेव! दीप्यमान तुम मुझे शुद्ध पवित्र के द्वारा पवित्र करो। हे अग्निदेवे! तुम यज्ञों को लक्ष्य करके मुझे स्वकर्म से पवित्र बनाओ॥ १८॥ हे अग्ने! तुम्हारा जो पवित्र करनेवाला सामर्थ्य ज्वालाओं के अन्दर फैला हुआ है, उस अपने बृहद् पवित्र बल से तुम हमें पवित्र करो॥ १९॥ सबको देखनेवाला वह पावक सोम आज अपने पवित्र बल से मुझे पवित्र करे और जो पवित्रकारी पवन है, वह भी मुझे पवित्र करे॥ २०॥ हे सविता देवता! तुम अपने पवित्र तथा अनुज्ञा दोनों के द्वारा मुझे चारों ओर से पवित्र करो॥ २१॥

वैश्वदेवी पुनती देव्यागाद्यस्यामिमा बह्वचस्तन्वो वीतपृष्ठाः। तया मदन्तः सधमादेषु वयर्ठ०स्याम पतयो रयीणाम्॥ २२॥ स्वादिष्ठया मदिष्ठया पवस्व सोम धारया। इन्द्राय पातवे सुतः॥ २३॥ विश्वानि देव सवितर्दुरितानि परासुव। यद् भद्रं तन्न आ सुव॥ २४॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः। सचेतसो विश्वे देवा यज्ञं प्रावतु नः शुभे॥ २५॥ त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना॥ २६॥ आपो हि ष्ठा मयोभुवस्तान ऽऊर्ज्जे दधातन। महे रणाय चक्षसे॥ २७॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥ २८॥ तस्मा ऽअरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ २९॥

---

भावार्थ—विश्वेदेवों से सम्बन्धित और पवित्र करती हुई यह सुरा कुम्भी प्राप्त हुई है। इसमें अनेक कमनीय शरीर धाराएँ विद्यमान हैं। उस सुराकुम्भी के द्वारा देवों के साथ बैठने के स्थान यज्ञ में आनन्दमय होते हुए हम धनों के स्वामी बने॥ २२॥ हे सोम! अत्यधिक सुस्वादु एवं मद्यकारिणी धार के साथ तुम पवित्र हो। तुम इन्द्र के पीने के लिये अभिषुत हुए हो॥ २३॥ हे सवितादेव! तुम हमसे सम्पूर्ण दुर्गुणों (व्यसनों) को दूर करो। जो शुभ गुण हैं, वे हमें प्रदान करो॥ २४॥ न्यूनातिरिक्त स्थानों को पूर्ण करनेवाला अग्नि इन्द्र, ब्रह्मा, बृहस्पति एवं ज्ञानयुक्त विश्वेदेव हमारे इस शुभ यज्ञ की रक्षा करे॥ २५॥ हे अति युवा अग्ने! तुम हमारी प्रार्थनाओं को सुनो। हविदाता कर्ता के मनुष्य हम ऋत्विजों की रक्षा करो। तुम कर्ता और उसके पुत्र—पौत्रादिकों की भी रक्षा करो॥ २६॥ जल सुख देनेवाले हो, वे हमें महारमणीय प्रकाश के लिये बल में धारण करे॥ २७॥ हे जलों! तुम्हारा जो अत्यधिक सुखकर सार है, उसी का तुम हमें यहाँ भाजन बनाओ। जैसे कामयमाना माताएँ अपने पुत्र को स्तनपान कराती हैं॥ २८॥ हे जल! हम तुम्हें उसके लिये प्रभूत मात्रा में प्राप्त करे, जिसके यज्ञगृह के लिये तुम अनुकूल होते हो। हे जलः! तुम हमें पवित्र करो।॥ २९॥

**द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳ शान्तिः शान्तिरेवशान्तिः सा मा शान्ति-रेधि॥ ३०॥ यतोयतः समीहसे ततो नो अभयं कुरु। शन्नः कुरु प्रजाभ्यो भयं नः पशुभ्यः॥ ३१॥**

**संकल्पः-कृतस्याभिषेककर्मणः समृद्ध्यर्थं दक्षिणां दातुमहमुसृज्ये।**

---

भावार्थ—द्यौ, आकाश, पृथ्वी, जल, औषधियाँ, वनस्पतियाँ, विश्वेदेवा, शब्दब्रह्म और सब कुछ मेरे लिये शान्तिमय होवें। स्वयं शान्ति ही शान्तिमयी हो। वही सर्वशान्ति मुझमें वृद्धि करे॥ ३०॥ हे प्रभु! जिस–जिससे तुम उचित समझते हो, उससे हमें भयमुक्त करो। हमारी संतति को तुम सुख प्रदान करो एवं हमारे पशुओं को अभय प्रदान करो॥ ३१॥

कर्ता अभिषेक की दक्षिणा प्रदान करने के उपरान्त दो बार आचमन करें, तदुपरान्त कर्ता की धर्मपत्नी दायीं ओर बैठ जावे।

---

## मातृकापूजनम्

आग्नेयकोणे प्रतिमास्वक्षत-पुञ्जेषु वा प्राक्संस्थमुदक्संस्थं वा पीठोपरि षोडशमातृकास्थापनं कुर्यात्। तद्यथा–

समीपे मातृवर्गस्य सर्वविघ्नहरं सदा।
त्रैलोक्यवन्दितं देवं गणेशं स्थापयाम्यहम्॥

गणेश

ॐ गणानां त्वा गणपतिꣳ हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥

एह्येहि विघ्नेश्वर विघ्नशान्त्यै पाशाङ्कुशाब्जान् वरदं दधान।
शूर्पाक्षसूत्रावसमन्दमूर्ते रक्षाध्वरं नो भगवन्नमस्ते॥

ॐ गणेशाय नमः गणेशमावाहयामि स्थापयामि॥ १॥

गौरी

ॐ आयङ्गौः पृश्निरक्रमीदसदन्मातरम्पुरः॥ पितरञ्च-प्रयन्त्स्वः॥

एह्येहि नीलोत्पलतुल्यनेत्रे श्वेताम्बरे प्रोज्ज्वलशूलहस्ते।
नागेन्द्रकन्ये भुवनेश्वरि त्वं पूजां ग्रहीतु मम देवि गौरि॥

ॐ गौर्यै नमः गौरीमावाहयामि स्थापयामि॥ २॥

---

षोडशमातृकास्थापन–अग्निकोण में एक लकड़ी के पीढ़े पर पश्चिमदिशा से पूर्वदिशा अथवा दक्षिणदिशा से उत्तरदिशा तक सोलह स्थानों पर अक्षत की ढेरी पर गणेशजी से प्रारम्भ कर तुष्टि एवं कुलदेवी पर्यन्त मातृका स्थापित कर पूजन करे। जिसका क्रम इस प्रकार से है–आचार्य 'समीपे मातृवर्गस्य०' से 'मावाहयामि स्था०' तक का उच्चारण करके पहले अक्षतपुंज पर गणेशजी के लिये कर्ता से अक्षत छोड़वायें। आचार्य 'ॐ आयङ्गौ०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके दूसरे अक्षतपुंज पर गौरी के लिये कर्ता से अक्षत छोड़वायें।

पद्मा—ॐ हिरण्यरूपाऽउषसो विरोक ऽउभाविन्द्राऽ उदिथः सूर्यश्च। आरोहतं वरुणमित्रगर्तन्ततश्चक्षाथामदितिन्दितिञ्चमित्रोसिवरुणोसि॥

एह्येहि पद्मे शशितुल्यनेत्रे पङ्के रुहाभे शुभचक्रहस्ते।
सुरासुरेन्द्रैरभिवन्दिते त्वं पूजां ग्रहीतुं मम यज्ञभूमौ॥

ॐ पद्मायै नमः। पद्मामावाहयामि स्थापयामि॥ ३॥

शची—ॐ निवेशनः सङ्गमनोवसूनांविश्वारूपाभिचष्टे-शचीभिः। देवऽइवसवितासत्यधर्म्मेन्द्रोनतस्थौसमरेपथीनाम्॥

एह्येहि कार्तस्वरतुल्यवर्णे गजाधिरूढे जलजाभिनेत्रे।
शक्रप्रिये प्रोज्वलवज्रहस्ते पूजां ग्रहीतुं शचि देवि शीघ्रम्॥

ॐ शच्यै नमः [illegible]ीमावाहयामि स्थापयामि॥ ४॥

मेधा—ॐ मेधां मे वरुणो ददातु मेधामग्निः प्रजापतिः॥ मेधामिन्द्रश्चवायुश्चमेधान्धाताददातुमे स्वाहा॥

एह्येहि मेधे शुभभूरिवस्त्रे पीताम्बरे पुस्तकपात्रहस्ते।
बुद्धिप्रदे हंस समाधिरूढे पूजां ग्रहीतुं मखमस्मदीयम्॥

ॐ मेधायै नमः मेधामावाहयामि स्थापयामि॥ ५॥

---

आचार्य 'ॐ हिरण्यरूपा०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके तीसरे अक्षतपुंज पर पद्मा के लिये कर्ता से अक्षत छोड़वायें।

आचार्य 'ॐ निवेशनं०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके चौथे अक्षतपुंज पर शची के लिये कर्ता से अक्षत छोड़वायें।

आचार्य 'ॐ मेधां मे०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके पाचवें अक्षतपुंज पर मेधा के लिये कर्ता से अक्षत छोड़वायें।

सावित्री–ॐ सवितात्त्वासवानाठं० सुवतामग्निर्गृहपतीनाठं० सोमोवनस्पतीनाम्॥ बृहस्पतिर्वाचऽइन्द्रोज्यैष्ठ्याय रुद्रःपशुभ्यो-मित्रः सत्योवरुणाधर्मपतीनाम्॥

एह्येहि सावित्री जगद्विधात्रि ब्रह्मप्रिये स्रुक्स्रुवपात्रहस्ते।
प्रतप्तजाम्बूनदतुल्यवर्णे पूजां ग्रहीतुं निजयागभूमौ॥

ॐ सावित्र्यै नमः सावित्रीमावाहयामि स्थापयामि॥ ६॥

विजया–ॐ विज्यन्धनुः कपर्दिनोविशल्योबाणवाँ२उत॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः।

एह्येहि शस्त्रास्त्रधरे कुमारि सुरासुराणां विजयप्रदात्रि।
त्रैलोक्यवन्दे शुभरत्नभूषे गृहाण पूजां विजये नमस्ते॥

ॐ विजयायै नमः विजयामावाहयामि स्थापयामि॥ ७॥

जया–ॐ बह्वीनाम्पिताबहुरस्यपुत्रश्चिश्चाकृणोति समनागत्य॥ इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठेनिनद्धोजयतिप्प्रसूतः॥

एह्येहि पद्मे रुहलोलनेत्रे जयप्रदे प्रोज्ज्वलशक्ति हस्ते।
ब्रह्मादिदेवैरभिवन्द्यमाने जये सुसिद्धिं कुरु सर्वदा मे॥

ॐ जयायै नमः जयामावाहयामि स्थापयामि॥ ८॥

---

आचार्य 'ॐ सवितात्त्वा०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके छठवें अक्षतपुंज पर सावित्री के लिये कर्ता से अक्षत छोड़वायें।

आचार्य 'ॐ विज्यन्धनुः०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके सातवें अक्षतपुंज पर विजया के लिये कर्ता से अक्षत छोड़वायें।

आचार्य 'ॐ बह्वीनाम्पितां०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके आठवें अक्षतपुंज पर जया के लिये कर्ता से अक्षत छोड़वायें।

देवसेना—ॐ इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणायज्ञः पुरऽ एतु सोमः॥ देवसेनानामभिभञ्जतीनाञ्जयन्तीनाम्मरुतोयन्त्वग्ग्रम्॥

एह्येहि चापसिधरे कुमारि मयूरवाहे कमलायताक्षि।
इन्द्रादिदेवैरपिपूज्यमाने प्रयच्छसि त्वं मम देवसेने॥

ॐ देवसेनायै नमः देवसेनामावाहयामि स्थापयामि॥ ९॥

स्वधा—ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधानमः॥ अक्षन्पितरो मीमदन्त पितरोतीतृपन्त पितरः पितरः शुन्धध्वम्॥

एह्येहि वैश्वानरवल्लभे त्वं कव्यं पितृभ्यः सततं वहन्ती।
स्वर्गाधिवासे शुभशक्तिहस्ते स्वधे तु नः पाहि मखं नमस्ते॥

ॐ स्वधायै नमः स्वधामावाहयामि स्थापयामि॥ १०॥

स्वाहा—ॐ स्वाहाप्राणेभ्यः साधिपतिकेभ्यः पृथिव्यैस्वाहा-ग्नयेस्वाहान्तरिक्षायस्वाहावायवेस्वाहा॥

एह्येहि वैश्वानरतुल्यदेहे तडित्प्रभे शक्तिधरे कुमारि।
हविर्गृहीत्वा सुरतृप्तिहेतोः स्वाहे च शीघ्रं मखमस्मदीयम्॥

ॐ स्वाहायै नमः स्वाहामावाहयामि स्थापयामि॥ ११॥

मातृ—ॐ आपोऽ अस्मान्मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु॥ विश्वꣳहि रिप्रंप्प्रवहन्ति देवीरुदिदाभ्यः शुचिरा-

---

आचार्य 'ॐ इन्द्रऽआसान्नेता०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके नवें अक्षतपुंज पर देवसेना के लिये कर्ता से अक्षत छोड़वायें। आचार्य 'ॐ पितृभ्यः०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके दसवें अक्षतपुंज पर स्वधा के लिये कर्ता से अक्षत छोड़वायें।

आचार्य 'ॐ स्वाहा प्राणेभ्यः०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके ग्यारहवें अक्षतपुंज पर स्वाहा के लिये कर्ता से अक्षत छोड़वायें। आचार्य 'ॐ आपो०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके बारहवें अक्षतपुंज पर मातृ के लिये कर्ता से अक्षत छोड़वायें।

पूतऽएमि॥ दीक्षातपसोस्तनूरसि तान्त्वाशिवार्ठ० शग्माम्परिदधे भद्रंवर्णं पुष्यन्॥

उपैत हे मातर आदिकर्त्र्यः सर्वस्य भूतस्य चराचरस्य।
देव्यस्त्रिलोवयर्चितदिव्यरूपा मखं मदीयं सकलं विधत्त॥

ॐ मातृभ्यो नमः मातृमावाहयामि स्थापयामि॥ १२॥

लोकमाता—ॐ रयिश्चमे रायश्चमे पुष्टञ्चमे पुष्टिश्चमे विभुचमे पूर्णञ्चमेपूर्णतरञ्चमे कुयवञ्चमेक्षितञ्चमेन्नञ्चमेक्षुच्चमेयज्ञेनकल्पन्ताम्॥

समाह्वयेसत्कृतलोकमातरः समस्तलोकैकविधानदक्षिणाः।
सुरेन्द्रवन्द्याम्बुरुहाङ्घ्रिमञ्जुलाः कुरुध्वमेतन्मम कर्ममङ्गलम्॥

ॐ लोकमातृभ्यो नमः लोकमातृः आवाहयामि स्थापयामि॥ १३॥

धृति—ॐ यत्प्रज्ञानमुत चेतो धृतिश्च यज्योतिरन्तर मृतं प्रजासु॥ यस्मान्न ऋते किंच न कर्म क्रियते तन्मे मनः शिवसङ्कल्पमस्तु॥

एह्येति भक्ताभयदे कुमारि समस्तलोकप्रियहेतुमूर्ते।
प्रोत्फुल्लपङ्के रुहलोचनेत्रे धृते मखं पाहि शिवस्वरूपे॥

ॐ धृत्यै नमः धृतिमावाहयामि स्थापयामि॥ १४॥

पुष्टि—ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्॥

एह्येहि पुष्टे शुभरत्नभूषे रक्ताम्बरे रक्तविशालनेत्रे।
भक्तप्रिये पुष्टिकरि त्रिलोके गृहाण पूजां शुभदे नमस्ते॥

ॐ पुष्ट्यै नमः पुष्टिमावाहयामि स्थापयामि॥ १५॥

---

आचार्य 'ॐ रयिश्चमे०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके तेरहवें अक्षतपुंज पर लोकमाता के लिये कर्ता से अक्षत छोड़वायें। आचार्य 'ॐ यत्प्रज्ञान०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके चौदहवें अक्षतपुंज पर धृति के लिये कर्ता से अक्षत छोड़वायें। आचार्य 'ॐ त्र्यम्बकं०' मन्त्र से 'मावाहयामि स्थापयामि' तक का उच्चारण करके पन्द्रहवें अक्षतपुंज पर पुष्टि के लिये कर्ता से अक्षत छोड़वायें।

( त्रिः ) वदोवदः। ( त्रिः )। वदोनृम्णानिपुरायः। ( त्रिः )। यमो हाउ। ( त्रिः )। पितरो हाउ। ( त्रिः )। भारुण्डो हाउ ( त्रिः ) इम॒ँ स्तोमाम्। अर्हातेजा। तावेदसहोये ३। होये होये॥ हाउ ( ३ )। ऊ २ वदः। ( त्रिः )! वदोवदः। ( त्रिः )। वदोनृम्णानिपुराणः। ( त्रिः )। यमोहाउ। ( त्रिः )। पितरो हाउ। ( त्रिः )। भारुण्डो हाउ। ( त्रिः ) रथामिवा। संमाहेमा। मानीषयहोये ३। होये होये॥ हाउ ( ३ )। ऊ २ वदः। ( त्रिः )। वदोवदः। ( त्रिः ) वदोनृम्णानिपुरायः। ( त्रिः )। यमोहाउ ( त्रिः )। पितरो हाउ। ( त्रिः ) भारूण्डो हाउ। ( त्रिः )। भद्राहिना। प्रमातिरा। स्यास॒ँ सदहोये ३। होये होये॥ हाउ ( ३ ) ऊ २ वदः ( त्रिः ) वदोवदः। ( त्रिः )। वदोनृम्णानिपुरायः। ( त्रिः ) यमोहाउ। ( त्रिः )। पितरो हाउ। ( त्रिः ) भारुण्डो हाउ। ( त्रिः )। अग्नाइसख्याइ। माराइषामा। वायन्तवहोये ३। होये होये॥ हाउ ( ३ )। ऊ २ वदः। ( त्रिः )। वदोवदः। ( त्रिः ) वदोनृम्णानिपुरायः। ( त्रिः )। पितरोहाउ। ( त्रिः ) पितरो हाउ। बारुण्डोहाउ। ( द्विः )। भारुण्डो ३ हाउ। वा॥ ए। वदोवदोनृम्णानिपुरायययमोवः पितरो भारुण्डः। ए। वदोवदोनृम्णानिपुरायययमोवः पितरो भारुण्डः। ए। वा। वदोवदोनृम्णानिपुरायययमोव पितरो भारुण्डा २३४५॥ ३॥ ( अ० ) अदितिर्मादित्यैः प्रतीच्यादिशः पातुबाहुच्युता पृथिवी द्यामिवोपरि। लोक कृतः पथिकृतो यजामहे ये देवानां हुतभागा इह स्थ॥ ४॥ कामाक्षिसंसारमलापहन्त्रि विद्युत्प्रभाचन्द्रनिभानने च। एह्येहि यज्ञे सकलार्थदात्रि गृहाण पूजां वरदे नमस्ते॥ कामाक्षायै० कामाक्षीमा०॥ ५॥

( ६३ ) ( ऋ० ) मानः समस्य दूढ्य १ः परिद्वेषसो अंहति ऊर्मिनं नावमा वधीत्॥ १॥ ( य० ) वृष्णऽ ऊर्मिरसि राष्ट्रदाराष्ट्रं मे देहि स्वाहा वृष्णऽ ऊर्म्मिरसि राष्ट्रदाराष्ट्रममुष्मै देहि वृषसेनोसि

राष्ट्रदाराष्ट्रम्मे देहि स्वाहा वृषसेनोऽसि राष्ट्रदाराष्ट्रममुष्मै देहि॥ २॥ (सा० ) अहा। वो ३ हा। वो ३ हा। सनादग्नाइ। मृणसि। आतुधानान्। नत्वारक्षा। सी ३ पृत। नासुजिग्यूः॥ अनुदहा। सहमू। रान्कयादाः। अहा। वो ३ हा। वो ३ हा। माता इहेल्याः। मुक्षत। दा १४३ इ। वी ३ या या ५ या ६५६॥ ३॥ ( अ० ) अङ्गेभ्यस्त उदराय जिह्वाया आस्याऽयते। दद्भ्यो गन्धाय ते नमः॥ ४॥ मृगाक्षि-वालार्कनिभामिह त्वामावाहये ज्ञानमयीं सुशीलाम्। ब्रह्मादि-देवार्चितपादयुग्मामागत्य यज्ञेऽत्र विधेहि भव्यम्॥ मृगाक्ष्यै० मृगाक्षीमा०॥ ५॥

( ६४ ) ( ऋ० ) भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्ष-भिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवां सस्तनूभिर्व्यशेम देवहितं यदायुः॥ १॥ ( य० ) भायै दार्वाहारं प्रभायाऽ अग्न्येधं ब्रध्नस्य विष्टपायाभिषेक्तारं वर्षिष्ठाय नाकाय परिवेष्टारं देवलोकाय पेशितारं मनुष्यलोकाय प्रकरितारꣳ सर्वेभ्यो लोकेभ्यऽ उप सेक्तारमवऽ ऋत्यै वधायोप-मन्थितारं मेधाय वासः पल्पूलीं प्रकामाय रजयित्रीम्॥ २॥ ( सा० ) वृषासोमा॥ द्युमा २ आसा २ इ। धृतादेषा ३ हा ३ इ। वार्ष व्रा २३४ ताः॥ वृषाघर्मा ३॥ इ ३ या॥ णा इदध्रिषे। इडा २३ भा ३४३। ओ २३४५ इ। डा॥ ३॥ ( अ० ) अभाशर्वौ मृदन्तं माभि यातं भूतपती नमो वाम्। प्रति हिंतामायतां मा विस्त्राष्टं मा नो हिंसिष्टं द्विपदो मा चतुष्पदः॥ ४॥ आवाहयेऽहं मृगलोचनां त्वामाकण्ठदीर्घनयनां मणिकुण्डलढ्याम्। मन्दस्मितां मृगमदोज्ज्वलमालदेहां विशाध्वरं नो वरदे नमस्ते॥ मृगलोचनायै० मृगलोचनामा० स्थापयामि॥ ५॥

---

## योगिनीपूजनम्

### ध्यानम्

स्मरामि चित्ते सततं सुरम्याः सुयोगिनीर्वोऽत्र गजाननाद्याः।
देवीश्चतुः षष्टिसुधांशुशुभ्राः स्वच्छं धरामण्डलमाशुकार्यम्॥

ॐ योगिनीदेवताभ्यो नमः, ध्यानं समर्पयामि।

### आवाहनम्

समस्तप्रत्यूहसमुच्चयस्य विनाशने प्राप्तगुणाः सुभव्याः।
गजाननाद्या वितनोमि देव्य आवाहनं वोऽत्र समागताः स्युः॥

ॐ योगिनीदेवताभ्यो नमः, आवाहनं समर्पयामि।

### आसनम्

दत्तं चतुष्षष्टि गजाननाद्या योगिन्य आरादिदमासनं च।
शुभप्रदाः सौख्यकरा भजन्तु भवन्तु मेऽभीष्टकराः सुवेषाः॥

ॐ योगिनीदेवताभ्यो नमः, आसनं समर्पयामि।

### पाद्यम्

योगिन्य आशुपरमानिगमप्रसिद्धाः प्रक्षालनायपदपङ्कजयोरुदारम्।
स्वच्छं सुशीतलमिदं भयकाहृतं च गृह्णन्त्वशेषमिदमिष्टकरं च वारि॥

ॐ योगिनीदेवताभ्यो नमः, पाद्यं समर्पयामि।

### अर्घ्यम्

सौजन्यसौख्यजननीजननीजनानां यासां कृपैव वसुधा वसुधारिणी मे।
ताः सर्वदैवगुरुगौरवधारिदेहा अर्घ्यं च गृह्णतमुदाऽऽशु गजाननाद्याः॥

ॐ योगिनीदेवताभ्यो नमः, अर्घ्यं समर्पयामि।

### आचमनीयम्

कङ्कोलपत्रहरिचन्दन - पुष्पयुक्तमेलालवङ्गलवली - घनसारसारम्।
दत्तं सदैव हृदये करुणाशयेस्मिन्देव्यो भजन्तु शुभमाचमनीयम्मभः॥

ॐ योगिनीदेवताभ्यो नमः, आचमनीयजलं समर्पयामि।

पञ्चामृतस्नानम्

गङ्गाजलेन सहितेन पयःसिताज्यैर्दध्नाऽमलेन मधुना तुलसीदलैश्च।
पञ्चामृतेन वरवेशगजाननाद्याः स्नानं मुदा कुरुत योगरतावरेण्याः॥
ॐ योगिनीदेवताभ्यो नमः, पञ्चामृतस्नानं समर्पयामि।

शुद्धोदकम्

जलेऽमलेमञ्जुविचित्र पुष्पाण्यच्छानि चानीय निपातितानि।
स्नानं विधेयं हि गजाननाद्या आगत्य युष्माभिरिहाङ्गणे ते॥
ॐ योगिनीदेवताभ्यो नमः, शुद्धोदकजलं समर्पयामि।

वस्त्रम्

अनर्घरत्नैरतिशोभमानं शुभं प्रियं मङ्गलकारकं च।
मयार्पितं वस्त्रमिदं विचित्रं कृते भवेद् वै वरयोगिनीनाम्॥
ॐ योगिनीदेवताभ्यो नमः, वस्त्रं समर्पयामि।

उपवस्त्रम्

त्रिविधतापविनाशविचक्षणाः परमभक्तियुतेन निवेदितम्।
सुरनुता उपवस्त्रमिदं नवं सुरभितं परिगृह्णत मेऽधुना॥
ॐ योगिनीदेवताभ्यो नमः, उपवस्त्रं समर्पयामि।

गन्धम्

योगिन्य आशु वनजातसुगन्धराशिं सप्रेम गृह्णत सुशीतलमच्छशोभम्।
सन्तापविस्तृतिहरं परमं पवित्रं द्रागर्पितं मम मनोरथदा भवेयुः॥
ॐ योगिनीदेवताभ्यो नमः, गन्धं समर्पयामि।

अक्षतान्

योगिन्य एतात्र सुगन्धितांश्च भक्त्या मया मोदसमर्पितांश्च।
गृह्णन्तु देव्यो द्रुतमक्षतान्मे समग्रविघ्नान् विनिवारयन्तु॥
ॐ योगिनीदेवताभ्यो नमः, अक्षतं समर्पयामि।

पुष्पम्

बहुविधं परितो हि समाहृतं समुचितं मकरन्दसमन्वितम्।
विकसितं कुसुमं विनिवेदितं कुरुत मे सफलं नयनाञ्चलैः॥
ॐ योगिनीदेवताभ्यो नमः, पुष्पं समर्पयामि।

रक्तचूर्णम्

धूपादिकेनातिसुवासितानि शोणश्रियानन्दविवर्धितानि।
श्रीरक्तचूर्णानि मनोहराणि गजाननाद्या मनसाऽर्पयामि॥
ॐ योगिनीदेवताभ्यो नमः, रक्तचूर्णं समर्पयामि।

धूपम्

लवङ्गपाटीरकचूर्णवर्धितं नरासुराणामपि सौख्यदायकम्।
गजाननाद्याः सुरभिप्रसारकं गृह्णन्तु धूपं सुखदं सुदेव्यः॥
ॐ योगिनीदेवताभ्यो नमः, धूपमाघ्रापयामि समर्पयामि।

दीपम्

सद्वर्तिकां ज्ञानविवर्धिकामिमां निपात्यदीयं विनिवेदितं मया।
प्रज्वालितं ध्वान्तविनाशकं च गृह्णन्तु देव्यं सततं शिवाय॥
ॐ योगिनीदेवताभ्यो नमः, दीपं दर्शयामि। (हस्तप्रक्षाल्यं)

नैवेद्यम्

सिद्धान्नकर्पूरविराजितं द्राक्सौरभ्यसान्द्रेण विभूषितं च।
नैवेद्यमेतद्रुचिरं सुगन्धि स्वीकृत्य मामत्र कृतार्थयन्तु॥
ॐ योगिनीदेवताभ्यो नमः, नैवेद्यं समर्पयामि। (हस्तप्रक्षालनार्थे मुखप्रक्षालनार्थे च जलं समर्पयामि।)

ताम्बूलम्

योगिन्य आशु गृहमेत्य शुभं मदीयं भक्त्यार्पितं परमगन्धयुतं सुरम्यम्।
एलालवङ्गबहुलं क्रमकादियुक्तं ताम्बूलमद्य मम गृह्णत मञ्जुहासाः॥
ॐ योगिनीदेवताभ्यो नमः मुखवासार्थं ताम्बूलं समर्पयामि।

दक्षिणाम्

देवासुरैर्नित्यमशेषकाले प्रगीयमानाः सततं सहासाः।
गृह्णन्तु सद्यः खलु दक्षिणां च गजाननाद्याः सुखदाभवन्तु॥
ॐ योगिनीदेवताभ्यो नमः, दक्षिणां समर्पयामि।

आर्तिक्यम्

नीराजना सौख्यमयी सदैव गाढान्धकारानपि दूरयन्ती।
अशेषपापैः परिपूरितस्य शुद्धिं करोति प्रियमानवस्य॥
ॐ योगिनीदेवताभ्यो नमः, आर्तिक्यं समर्पयामि।

प्रदक्षिणाम्

प्रदक्षिणाः सन्ति गजाननाद्याः पदे पदे दुःखविनाशिका अपि।
जन्मान्तरस्यापि विनाशकारिकाः पापस्य याश्चित्तविवर्धितस्य॥
ॐ योगिनीदेवताभ्यो नमः, प्रदक्षिणां समर्पयामि।

पुष्पाञ्जलिम्

गजाननाद्यारुचिरं मदीयं गृह्णन्तु पुष्पाञ्जलिमत्र देव्यः।
योगिन्य आशूद्धटशङ्कराश्च भवन्तु भूपालनतत्पराश्च॥
ॐ योगिनीदेवताभ्यो नमः, पुष्पाञ्जलिं समर्पयामि।

स्तुतिम्

जनामि नोऽर्चनविधिं परमं क्षमध्वं लोकार्तिपुञ्जमतुलं विनिपातयन्त्यः।
योगिन्य आशु मम मङ्गलमातनुध्वं कुर्वन्तु दूरमनिशं दुरितात्समस्तात्॥
ॐ योगिनीदेवताभ्यो नमः, स्तुतिं समर्पयामि।

इति सम्पूज्य 'अनया पूजया चतुः षष्टियोगिन्यः प्रीयन्ताम्।'

---

## क्षेत्रपालस्थापनम्

आचार्य वायव्यकोण में सफेद वस्त्र से ढकी हुई पीठ पर चारों ओर रेखाओं को लगाकर मध्य में पूर्वदिशा से पश्चिमदिशा, उत्तरदिशा से दक्षिणदिशा में दो–दो रेखाओं का निर्माण करें, नवग्रह के सदृश नौ कोष्ठकों का निर्माण करके पूर्वदिशा में छः षट्दल और उत्तरदिशा और ईशानकोण के मध्य के कोष्ठों में सप्तदल का निर्माण करें, आचार्य निम्न संकल्प कर्ता से करावें–

**देशकालौ स्मृत्वा, अस्मिन् होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणि क्षेत्रपालपूजनं करिष्ये॥**

वायव्यकोण में क्षेत्रपाल का पूजन करें, उसकी विधि इस प्रकार से है–अजर, व्यापक, इन्द्रादि का उन्हीं के मन्त्रों से आवाहन और स्थापन निम्न क्रम से करें–

**तद्यथा–ॐ इमौ ते पक्षावजरौ पतत्रिणौ याभ्यार्ठ० रक्षार्ठ०स्यप हर्ठ० स्यग्ने। ताभ्यां पतेम सुकृतामु लोकं यत्र ऋषयो जग्मुः प्रथमजाः पुराणाः॥ ॐ अजराय नमः अजरमावाहयामि स्थापयामि॥ १॥**

**ॐ प्रथमा वार्ठ० सरथिना सुवर्णा देवौ पश्यन्तौ भुवनानि विश्वा। अपिप्रयं चोदना वां मिमाना होतारा ज्योतिः प्रदिशा दिशन्ता॥ ॐ व्यापकाय नमः व्यापकमावाहयामि स्थापयामि॥ २॥**

**ॐ इन्द्रस्य वज्रो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः। सेमां नो हव्यदातिं जुषाणो देव रथ प्रतिहव्या गृभाय॥ ॐ इन्द्रचौराय नमः। इन्द्रचौरमावाहयामि स्थापयामि॥ ३॥**

**ॐ एवेदिन्द्रं वृषणं वज्रबाहुं वसिष्ठासो अभ्यर्चन्त्यर्कैः। स नः स्तुतो वीरवद्धातु गोमद्यूयं पात स्वस्तिभिः सदा नः॥ ॐ इन्द्रमूर्तये नमः। इन्द्रमूर्तिमावाहयामि स्थापयामि॥ ४॥**

**ॐ उक्षा समुद्रो अरुणः सुपर्णः पूर्वस्य योनिं पितुराविवेश। मध्ये दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्तौ॥ ॐ उक्ष्णे नमः। उक्षाणमावाहयामि स्थापयामि॥ ५॥**

ॐ यद्देवा देवहेडनं देवासश्चकृमा वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वर्ठ०हसः॥ ॐ कूष्माण्डाय नमः। कूष्माण्डमावाहयामि स्थापयामि॥ ६॥

आग्नेये षट्सु दलेषु

ॐ स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः। वरिवोवित्परिस्त्रव॥ ॐ वरुणाय नमः। वरुणमावाहयामि स्थापयामि॥ ७॥

ॐ बाहू मे बलमिन्द्रियर्ठ० हस्तौ मे कर्म वीर्यम्। आत्मा क्षत्रमुरो मम॥ ॐ वटुकाय नमः। वटुकमावाहयामि स्थापयामि॥ ८॥

ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादुत। अथो यमस्य पड्वीशात्सर्वस्माद्देवकिल्बिषात्॥ ॐ विमुक्ताय नमः। विमुक्तमावाहयामि स्थापयामि॥ ९॥

ॐ कुर्वन्नेवेह कर्माणि जिजीविषेच्छतर्ठ० समाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ ॐ लिप्तकाय नमः। लिप्तकमावाहयामि स्थापयामि॥ १०॥

ॐ सन्नः सिन्धुरवभृथायोद्यतः समुद्रोऽभ्यवह्रियमाणः सलिलः प्रप्लुतो ययोरोजसा स्कभिता रजार्ठ०सि वीर्येभिर्वीरतमा शविष्ठा। या पत्येते अप्रतीता सहोभिर्विष्णू अगन्वरुणा पूर्वहूतौ॥ ॐ लीलालोकाय नमः। लीलालोकमावाहयामि स्थापयामि॥ ११॥

ॐ नमो गणेभ्यो गणपतिभ्यश्च वो नमो नमो व्रातेभ्यो व्रातपतिभ्यश्च वो नमो नमो गृत्सेभ्यो गृत्सपतिभ्यश्च वो नमो नमो विश्वरूपेभ्यो विश्वरूपेभ्यश्च वो नमः॥ ॐ एकदंष्ट्राय नमः। एकादंष्ट्रमावाहयामि स्थापयामि॥ १२॥

दक्षिणषट्के

ॐ अर्मेभ्यो हस्तिपं जवायाश्वपं पुष्ट्यै गोपालं वीर्यायाविपालं तेजसेऽजपालमिरायै कीनाशं कीलालाय सुराकारं भद्राय गृहपर्ठ० श्रेयसे वित्तधमाध्यक्ष्यायानुक्षत्तारम्॥ ॐ ऐरावताय नमः। ऐरावतमावाहयामि स्थापयामि ॥ १३॥

ॐ या ओषधीः पूर्वा जाता देवभ्यस्त्रियुगं पुरा। मनैनु बभ्रूणामहर्ठ०शतं धामानि सप्त च॥ ॐ ओषधीघ्नाय नमः। ओषधीघ्न-मावाहयामि स्थापयामि॥ १४॥

ॐ त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम्। उर्वारुकमिव बन्धनादितो मुक्षीय मामुतः॥ ॐ बन्धनाय नमः। बन्धनमावाहयामि स्थाप-यामि॥ १५॥

ॐ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाजं नः स्वदतु स्वाहा॥ ॐ दिव्यकरणाय नमः। दिव्यकरणमावाहयामि स्थापयामि॥ १६॥

ॐ सीसेन तन्त्रं मनसा मनीषिण ऊर्णासूत्रेण कवयो वयन्ति। अश्विना यज्ञर्ठ० सविता सरस्वतीन्द्रस्य रूपं वरुणो भिषजयन्॥ ॐ कम्बलाय नमः। कम्बलमावाहयामि स्थापयामि॥ १७॥

ॐ आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभण-श्चर्षणीनाम्। संक्रन्दनोऽनिमष एकवीरः शतर्ठ० सेना अजय-त्साकमिन्द्रः॥ ॐ भीषणाय नमः। भीषणमावाहयामि स्थापयामि॥ १८॥

नैर्ऋत्यषट्के

ॐ इमर्ठ० साहस्त्रर्ठ० शतधारमुत्सं व्यच्यमानर्ठ० सरिरस्य मध्ये। घृतं दुहानामदितिं जनायाग्ने मा हिर्ठ०सीः परमे व्योमन्॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद। गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु॥ ॐ गवयाय नमः। गववमावाहयामि स्थापयामि॥ १९॥

ॐ कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः। प्लाशिर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः॥ ॐ घण्टाय नमः। घण्टामावाहयामि स्थापयामि॥ २०॥

ॐ आक्रन्दय बलमोजो न आधा निष्टनिहि दुरिताबाधमानः। अपप्रोथ दुन्दुभे दुच्छुना इत इन्द्रस्य मुष्टिरसि वीडयस्व॥ ॐ व्यालाय नमः। व्यालमावाहयामि स्थापयामि॥ २१॥

ॐ इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः। सुते दधिष्व नश्चनः॥ ॐ अंशवे नमः। अंशुमावाहयामि स्थापयामि॥ २२॥

ॐ चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि। रयिं पिशङ्गं बहुलं पुरुस्पृहर्ठ० हरिरेति कनिक्रदत्॥ ॐ चन्द्रवारुणाय नमः। चन्द्रवारुण-मावाहयामि स्थापयामि ॥ २३॥

ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधिपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम्॥ ॐ घटाटोपाय नमः। घटाटोपमावाहयामि स्थापयामि॥ २४॥

पश्चिमे षट्सु दलेषु

ॐ उग्रं लोहितेन मित्रर्ठ० सौव्रत्येन रुद्रं दौर्व्रत्येनेन्द्रं प्रक्रीडेन मरुतो बलेन साध्यान्प्रमुदा। भवस्य कण्ठ्यर्ठ० रुद्रस्यान्तः पार्श्व्यं महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत्॥ ॐ जटिलाय नमः। जटिलमावाहयामि स्थापयामि॥ २५॥

ॐ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत्। अग्ने क्रत्वा क्रतूँरनु॥ रनु॥ ॐ क्रतवे नमः। क्रतुमावाहयामि स्थापयामि॥ २६॥

ॐ आजिघ्र कलशं मह्या त्वा विशन्त्विन्दवः। पुनरूर्जा निवर्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माविशताद्रयिः॥ ॐ घण्टेश्वराय नमः। घण्टेश्वरमावाहयामि स्थापयामि॥ २७॥

ॐ वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु। आयाहि सोमपीतये स्पार्हो देव नियुत्वता॥ ॐ विटकाय नमः। विटकमावाहयामि स्थापयामि॥ २८॥

ॐ दैव्या होतारा ऊर्ध्वमध्वरं नोऽग्रेर्जिह्वामभिगृणीतम्। कृणुतं नः स्विष्टिम्॥ ॐ मणिमानाय नमः। मणिमानमावाहयामि स्थापयामि॥२९॥

ॐ त्रीणि त आहुर्दिवि बन्धनानि त्रीण्यप्सु त्रीण्यन्तःसमुद्रे। उतेव मे वरुणश्छन्त्स्यर्वन्यत्रा त आहुः परमं जनित्रम्॥ ॐ गणवन्धाय नमः। गणवन्धमावाहयामि स्थापयामि॥ ३०॥

वायव्यदिक्कोष्ठेषट्सुदलेषुक्रमेण

ॐ प्रतिश्रुत्काया अर्तनं घोषाय भषमन्ताय बहुवादिन-मनन्ताय मूकर्ठ० शब्दायाडम्बराघातं महसे वीणावादं क्रोशाय तूणवध्म-मवरस्पराय शङ्खध्मं वनाय वनपमन्यतोऽरण्याय दावपम्॥ ॐ मुण्डाय नमः। मुण्डमावाहयामि स्थापयामि॥ ३१॥

ॐ शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः॥ ॐ वर्वूकराय नमः। वर्वूकरमावाहयामि स्थाप-यामि॥ ३२॥

ॐ वनस्पते वीड्वङ्गो हि भूया अस्मत्सखाप्रतरणः सुवीरः। गोभिः सन्नद्धो असिवीडय स्वास्स्थाता ते जयतु जेत्वानि॥ ॐ सुधापाय नमः। सुधापमावाहयामि स्थापयामि॥ ३३॥

ॐ सुपर्णं वस्ते मृगो अस्यादन्तो गोभिः संनद्धा पतति प्रसूता। यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यर्ठ०सन्॥ ॐ वैनाय नमः। वैनमावाहयामि स्थापयामि॥ ३४॥

ॐ अग्ने अच्छा वदेह नः प्रति नः सुमना भव। प्र नो यच्छ सहस्त्रजित्वर्ठ०हि धनदा असि स्वाहा॥ ॐ पवनाय नमः। पवनमावाहयामि स्थापयामि॥ ३५॥

ॐ भद्रं कर्णेभिःशृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः॥ ॐ ढुण्ढकरणाय नमः। ढुण्ढकरणमावाहयामि स्थापयामि॥ ३६॥

ॐ अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः। विश्वा यदजयः स्पृधः॥ ॐ स्थविराय नमः। स्थविरमावाहयामि स्थापयामि॥ ३७॥

ॐ वातं प्राणेनापानेन नासिके उपयाममधरेणौष्ठेन सदुत्तरेण प्रकाशेनान्तरमनूकाशेन बाह्यं निवेष्यं मूर्ध्ना स्तनयित्नु निर्बाधेनाशनिं मस्तिष्केण विद्युतं कनीनकाभ्यां कर्णाभ्यार्ठ० श्रोतर्ठ० श्रोत्राभ्यां कर्णौ तेदनीमधरकण्ठेनापः शुष्ककण्ठेन चित्तं मन्याभिरदितिर्ठ०

शीर्ष्णा निर्ऋतिं निर्जल्पेन शीर्ष्णा संक्रोशैः प्राणान् रेष्माणर्ठ० स्तुपेन॥ ॐ दन्तुर नमः। दन्तुरमावाहयामि स्थापयामि॥ ३८॥

ॐ उत्तरादिकोष्ठेसप्तसुदलेषु

ॐ इदं हविः प्रजननं मे अस्तु दशवीरर्ठ० सर्वगणर्ठ० स्वस्तये। आत्मसनि प्रजासनि पशुसनि लोकसन्य भयसनि। अग्निः प्रजां बहुलां मे करोत्वन्नं पयो रेतो अस्मासु धत्त॥ ॐ धनदाय नमः। धनदमावाहयामि स्थापयामि॥ ३९॥

ॐ खड्गो वैश्वदेवः श्वा कृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिर्ठ०हो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै विश्वेषां देवानां पृषतः॥ ॐ नागकर्णाय नमः। नागकर्णमावाहयामि स्थापयामि॥ ४०॥

ॐ मृगो न भीमः कुचरो गिरिष्ठाः परावत आजगन्था परस्याः। सृकर्ठ०सर्ठ०शाय पविमिन्द्र तिग्मं वि शत्रून् ताढि वि मृधो नुदस्व॥ ॐ महाबलाय नमः। महाबलमावाहयामि स्थापयामि॥ ४१॥

ॐ इन्दुर्दक्षः श्येन ऋतावा हिरण्यपक्षः शकुनो भुरण्युः। महान् सधस्थे ध्रुव आ निषत्तो नमस्ते अस्तु मा मा हिर्ठ०सीः॥ ॐ फेत्काराय नमः। फेत्कारमावाहयामि स्थापयामि॥ ४२॥

ॐ जीमूतस्येव भवति प्रतीकं यद्वर्मी याति समदामुपस्थे। अनाविद्धया तन्वा जय त्वर्ठ० स त्वा वर्मणो महिमा पिपर्तु॥ ॐ वीरकाय नमः। वीरकमावाहयामि स्थापयामि॥ ४३॥

ॐ ईशानदिक्कोष्ठेसप्तसुदलेषुक्रमेण

ॐ तीव्रान्घोषान्कृण्वते वृषपाणयोऽश्वा रथेभिः सह वाजयन्त। अवक्रामन्तः प्रपदैरमित्रान्क्षिणन्ति शत्रूं १॥ रनपव्ययन्तः॥ ॐ सिंहाय नमः। सिंहमावाहयामि स्थापयामि॥ ४४॥

ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ२॥ आसादयादिह॥ ॐ मृगाय नमः। मृगमावाहयामि स्थापयामि॥ ४५॥

ॐ अदित्यास्त्वा पृष्ठे सादयां यन्तरिक्षस्य धर्त्रीं विष्टं भनीं दिशामधिपत्नीं भुवनानाम्। ऊर्मिद्रप्सो अपामसि विश्वकर्मा त ऋषिरश्विनाध्वर्यू सादयतामिह त्वा॥ ॐ यक्षाय नमः। यक्षमावाहयामि स्थापयामि॥ ४६॥

ॐ द्यौस्ते पृथिव्यन्तरिक्षं वायुश्छिद्रं पृणातु ते। सूर्यस्ते नक्षत्रैः सह लोकं कृणोतु साधुया॥ ॐ मेघवाहनाय नमः। मेघवाहनमावाहयामि स्थापयामि॥ ४७॥

ॐ संबर्हिरङ्क्तार्ठ०हविषा घृतेन समादित्यैर्वसुभिः संमरुद्धिः। समिन्द्रो विश्वदेवेभिरङ्क्तां दिव्यं नभो गच्छतु यत्स्वाहा॥ ॐ तीक्ष्णाय नमः। तीक्ष्णमावाहयामि स्थापयामि॥ ४८॥

ॐ पवमानः सो अद्य नः पवित्रेण विचर्षणिः। यः पोता स पुनातु मा॥ ॐ अमलाय नमः। अमलमावाहयामि स्थापयामि॥ ४९॥

ॐ अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते॥ ॐ शुक्राय नमः। शुक्रमावाहयामि स्थापयामि॥ ५०॥

पुनः आचार्य–ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञर्ठ० समिमं द धातु। विश्वेदेवास इह मादयन्तामों ३ँप्रतिष्ठ॥ इस मन्त्र का उच्चारण करें।

## क्षेत्रपालपूजनम्

### ध्यानम्

श्रीक्षेत्रपालान्सुरपुष्पमालान्सर्वान्तरायाशु विनाशकालान्।
दत्ताखिलाभीप्सितवर्गजालान्ध्यायेऽधुना चन्दनलिप्तभालान्॥
ॐ साङ्गेभ्यः सपरिवारेभ्यः सशक्तिकेभ्यः सवाहनेभ्यः सायुधेभ्यः क्षेत्रपालेभ्यो नमः,
ध्यानं समर्पयामि।

### आवाहनम्

समस्तप्रत्यूहसमुच्चयस्य विनाशने प्राप्तगुणाः सुभव्याः।
आवाहनं क्षेत्रसुपालका वः करोम्यहं भव्यकरा भवन्तु॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, आवाहनं समर्पयामि।

### आसनम्

चित्रप्रभाभासुरमच्छभक्त्यार्पितं मया साम्प्रतमासनं च।
श्रीक्षेत्रपालाः सुतरां भजन्तु भवन्तु मेऽभीष्टकराः सहाङ्गैः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, आसनं समर्पयामि।

### पाद्यम्

विबुधा निगमप्रसिद्धाः प्रक्षालनाय पदपङ्कजयोरुदारम्।
स्वच्छं सुशीतलमिदं मयकाहृतं च गृह्णन्त्वशेषमिदमिष्टकरं च वारि॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पाद्यं समर्पयामि।

### अर्घ्यम्

सौजन्यसौख्यजननी जननी जनानां येषां कृपैव वसुधा वसुधारिणी वै।
ते सर्वदेवगुरुगौरवधारिदेहा अर्घ्यं मुदा हि च सुरा मम धारयन्तु॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, अर्घ्यं समर्पयामि।

### आचमनीयम्

कङ्कोलपत्रहरिचन्दन - पुष्पयुक्तमेलालवङ्गलवलीघनसारसारम्।
दत्तं सदैव हृदये करुणाशयेऽस्मिन्देवा भजन्तु शुभमाचमनीयमम्भः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, आचमनीयं समर्पयामि।

पञ्चामृतस्नानम्

विमलगाङ्गजलेन युतं पयोघृतसितादधिसर्पिसमन्वितम्।
प्रियतरं भवतां परिगृह्णत यदि कृपाप्रभवो मयि सेवके॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पञ्चामृतस्नानं समर्पयामि।

शुद्धोदकस्नानम्

जले समादाय विचित्रपुष्पाण्यच्छानि चानीय निपातितानि।
स्नानं विधेयं विबुधाः समन्तादागत्य युष्माभिरिहाङ्गणे मे॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, शुद्धोदकस्नानं समर्पयामि।

वस्त्रम्

अनर्घ्यरत्नैरतिभासितं शुभं सदा प्रियं मङ्गलकारकं वरम्।
स्वच्छं च वस्त्रं विनिवेदितं मया प्रमोददं वै भवतां कृते भवेत्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, वस्त्रं समर्पयामि।

यज्ञोपवीतम्

कौशेयसूत्रविहितं विमलां सुचारु वेदोक्तरीतिविहितं परिपावनञ्च।
क्षेत्राधिपाः सुमनसः सुनिवेदितं च यज्ञोपवीतमुररीक्रियतां सुदेवाः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, यज्ञोपवीतं समर्पयामि।

उपवस्त्रम्

विविधता पविनाशविचक्षणाः परमभक्तियुतेन निवेदितम्।
सुरनुता उपवस्त्रमिदं नवं सुरभितं परिगृह्णत मेऽधुना॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, उपवस्त्रं समर्पयामि।

गन्धम्

क्षेत्राधिपा मलयजातसुगन्धराशिं सप्रेम गृह्णत सुशीतलमच्छशोभम्।
सन्तापसन्ततिहरं परमं पवित्रं द्रागर्पितं मम मनोरथपूरकाः स्युः॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, गन्धं समर्पयामि।

अक्षतान्

विमलगाङ्गजलैः परिमार्जितं सुरभिकुङ्कुमरागसुरञ्जितम्।
सततमक्षतमादरचेतसा सकलसौम्यमयं शुभकारकम्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, अक्षतान् समर्पयामि।

पुष्पम्

बहुविधं परितो हि समाहृतं समुचितं मकरन्दसमन्वितम्।
विकसितं कुसुमं विनिवेदितं कुरुत मे सफलं नयनाञ्चलैः॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पुष्पं समर्पयामि।

धूपम्

लवङ्गपाटीवरचूर्णवर्द्धितं सर्वासुराणामपि सौख्यकारि।
लोकत्रये गन्धकरं प्रशस्तं क्षेत्राधिपा जिघ्रत धूपगन्धम्॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, धूपमाघ्रापयामि समर्पयामि।

दीपम्

सद्वर्त्तिकां ज्ञानविवर्द्धिकां परां निर्वाण दीपं विनिवेदितं मुदा।
प्रज्वालितं ध्वान्तिविनाशकारकं गृह्णन्तु ज्ञानस्य विशालरूपम्॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, दीपं दर्शयामि। (हस्तप्रक्षालनम्)

नैवेद्यम्

सिद्धान्नकर्पूरविराजितं पुरः सौरभ्यसान्द्रेण विवर्धितं तथा।
नैवेद्यमेतद्रुचिरं सुगन्धितं स्वीकृत्य मामत्र कृतार्थयन्तु॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, नैवेद्यं समर्पयामि।

(हस्तप्रक्षालनार्थे, मुखप्रक्षालनार्थे च जलं समर्पयामि। पुनराचमनीयं जलं स०।)

ताम्बूलम्

श्रीक्षेत्रपालविबुधाः सदने मदीये भक्त्यार्पितं परमगन्धमयं मनोज्ञम्।
एलालवङ्गलसितं क्रमुकादिकान्तं ताम्बूलमद्य मम गृह्णत हे सुरेन्द्राः॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, मुखवासार्थं ताम्बूलं समर्पयामि।

दक्षिणाम्

देवासुरैर्नित्यमशेषकाले प्रगीयमानाः प्रभवः पुराणाः।
गृह्णन्तु सद्यः खलु दक्षिणां मे ध्यायेन भक्ते लघु वर्तितव्यम्॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, दक्षिणां समर्पयामि।

नीराजनम्

नीराजना सौख्यमयी सदैव गाढान्धकारादपि दूरकर्त्री।
अशेषपापैः परिपूरितस्य शुद्धिं करोति प्रियमानसत्य॥

ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, नीराजनं समर्पयामि।

प्रदक्षिणाम्

प्रदक्षिणाः सन्ति प्रदक्षिणा अपि पदे पदे दुःखविनाशिकास्तथा।
जन्मान्तरस्यापि विनाशकारिकाः पापस्य याश्चित्तविवर्धितस्य॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, प्रदक्षिणां समर्पयामि।

पुष्पाञ्जलिम्

क्षेत्राधिपाविमलपुष्पवराञ्जलिं मे भक्त्यार्पितं सरसमच्छरसैःप्रपूर्णम्।
दीने विधाय करुणां मयि हेसुरेन्द्राः स्वीकृत्य दीनजनवत्सलतां किरन्तु॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, पुष्पाञ्जलिं समर्पयामि।

स्तुतिम्

जानामि नोऽर्चनविधिं परमं क्षमध्वं लोकार्तिपुञ्जमतुलं हरतारमेव।
क्षेत्राधिपालविबुधाः सुखमाकिरन्तु कुर्वन्तु दूरमनिशं दुरितात्समस्तात्॥
ॐ सा० स० स० स० सा० क्षेत्रपालेभ्यो नमः, स्तुतिं समर्पयामि।

आचार्य कर्ता से पूजन करवाके पुनः मध्य भाग में अष्टदल का निर्माण कर के वहाँ कलश की स्थापना करावें। तदुपरान्त सुवर्ण से निर्मित क्षेत्रपाल की प्रतिमा का अग्न्युत्तारण करवाके निम्न वैदिक मन्त्र का उच्चारण करके कर्ता से आवाहन करवाके क्षेत्रपाल प्रतिमा को स्थापित करावें—ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु। ये अन्तरिक्षे ये दिवि तेभ्यःसर्वेभ्यो नमः॥

---

# कुशकण्डिकाकरणम्

अग्नेर्दक्षिणतो ब्रह्मासनम्। अग्नेरुत्तरतः प्रणीतासनद्वयम्। ब्रह्मासने ब्रह्मोपवेशनम्। यावत्कर्म समाप्यते तावत्त्व ब्रह्मा भव 'भवामि' इति। पठित्वा तत्रोपवेशनम्। 'भवामि' इति ब्रह्मणः प्रत्युक्तिः। ब्रह्मा वाग्यतश्च भवेत्। ततः प्रणीतापात्रं सव्यहस्ते धृत्वा दक्षिणहस्तगृहीतेनोदकपात्रेण तत्र जलं सम्पूर्य पश्चादास्तीर्णकुशैषु दक्षिणहस्तेन निधाय (कुशैराच्छाद्य तत्पात्रमालभ्य ब्रह्मणो-मुखमवलोक्य ईक्षणमात्रेण ब्रह्मणाऽनुज्ञातः उत्तरत आस्तीर्णेषु कुशेषु निदध्यात्। ततो द्वादशानां परिस्तरण कुशानां चतुरो भागान् वामहस्ते कृत्वा एकैकभागेन आग्नेयादीशानान्तम्, ब्रह्मणोऽग्निपर्यन्तम्, नैर्ऋत्याद्वायव्यान्तं अग्नितः प्रणीतापर्यन्तम्। इतरथा वृत्तिः। तत उत्तरतः स्तीर्णकुशेषु द्विशः पात्राणि यथा सम्भवं न्युब्जानि उदक्संस्थानि प्राक्संस्थानि वा आसादयेत्। पवित्रे छेदनकुशाः। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। संमार्जनकुशाः पञ्च। उपयमनकुशाः सप्त। समिधस्तिस्त्रः। स्रुवः। आज्यम्। तण्डुला। पूर्णपात्रम्। उपल्पनीयानिद्रव्याणि निधाय तत्तद्ग्रहवस्त्राणि। अधिदेवताद्यर्थं श्वेतानि। तत्तद्ग्रहवर्णाः। तत्तद्ग्रह पुष्पाणि। तत्तद्ग्रहधूपाः तत्तदग्रहनैवेद्यानि। फलानि। दक्षिणाः वितानम्। अर्कादिसमिधिः। सयवतिलाः पूर्णाहुत्यर्थं नारिकेल-वस्त्रादि। ततः पवित्रकरणम्। आसादितकुशपत्रद्वयं स्थौल्येन समं मध्यशल्यरहितं वामहस्ते कृत्वा अग्रतः प्रादेशमात्रं परिमाय मूले तयोरुपरि कुशत्रयमुदग्ग्रं निधाय तत्कुशत्रय तयोर्मूलभागेन प्रादक्षिण्येन परिवेष्टय तयोः प्रादेशपरिमणामग्रभागं वामस्ते कृत्वा अवशिष्टं मूलभागं कुशत्रयं च दक्षिणहस्ते धृत्वा दक्षिणहस्तेन त्रोटयेत् परित्यजेच्च। शिष्टं पत्रद्वयं पवित्रम्। तस्मिन्पत्रद्वयेऽविश्लेषाय ग्रथिं कुर्यात्। ततः प्रागग्रं प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र सपवित्रेण पात्रान्तरेण हस्तेन वा प्रणीतोदकं त्रिरासिच्य प्रोक्षणीपात्रं सव्ये कृत्वा दक्षिणेन वामहस्तधृतमेव कर्णसमुत्थाय नीचैः कृत्वा प्रणीतोदकेनं पवित्रानोतेनोत्तानहस्तेन प्रोक्षणीः प्रोक्षयेत्। ततः प्रोक्षणीजलेन आज्यस्थालीं प्रोक्षणम्। चरुस्थालीं प्रोक्षणम्। समार्जनकुशानां प्रोक्षणम्। उपयमनकुशानां प्रोक्षणम्। समिधां प्रोक्षणम्। स्त्रुवस्य प्रोक्षणम्। आज्यस्य प्रोक्षणम्। पूर्णपात्रस्य प्रोक्षणम्। ततस्ते पवित्रे प्रोक्षणीपात्रे संस्थाप्य प्रोक्षणीपात्रमग्निप्रणतयोर्मध्ये

निदध्यात्। ततोऽग्नेः पश्चादाज्यस्थालीं निधाय तत्राज्यं प्रक्षिपेत्। एवं चरुस्थालीमग्नेः पश्चिमतो निधाय तत्र सपवित्रायां त्रिः प्रक्षालियान् तण्डुलान् प्रक्षिप्य प्रणीतोदकमासिच्योपयुक्तं जलं तत्र निनीय ब्रह्मदक्षिणत आज्यं आचार्य उत्तरतश्चरुमदग्धमस्त्रावितमण्डमन्तरूष्मपक्वं सुश्रृतं पचेत्। (केवलाज्ये तु उत्तराश्रितामाज्य स्थालीमग्नावारोपयेत्।) ततोऽग्नेर्ज्वलदुल्मुकमादाय ईशानादि-प्रदक्षिणमीशान पर्यन्तमग्निमाज्यचर्वोः परितं भ्रामयित्वोल्मुकमग्नौ प्रक्षिप्य अप्रदक्षिणं हस्तमीशानकोणपर्यन्तं पर्यावर्तयेत्। अर्द्धश्रिते चरौ स्रुवं गृहीत्वाऽधोबिलं सकृत् प्रतप्य संमार्जनकुशानाममग्रैरन्तरतः उपरि मूलादारभ्याग्रपर्यन्तं प्राञ्चं संमृज्य कुशमूलैर्बहिरधः प्रदेशे अग्रादारभ्य प्रत्यञ्चं समृज्य संमार्जन कुशानग्नौ प्रक्षिप्य प्रणीतोदकेन स्रुवमभ्युक्ष्य पुनःस्रुवं प्रयप्य दक्षिणस्यां दिशि तं तस्थापयेत्। तत् श्रृतं चरुं स्रुवेण गृहीतेनाज्येनाभिघार्य आज्यस्थालीं चरोः पूर्वेणानीयोत्तरत उद्वास्याग्नेः पश्चिमतः स्थापयेत्। ततश्चरुमादाय उत्तरत उद्वास्य आज्यस्य पूर्वेणानीय आज्यस्योत्तरतः स्थापयेत्। ततो दक्षिणहस्तस्याङ्गुष्ठानामिकाभ्यां पवित्रयोर्मूलं सङ्गृह्य वामहस्तस्याङ्गुष्ठानामिकाभ्यां पवित्रयोर्मूलं संङ्गृह्य वामहस्तस्याङ्गुष्ठा नामिकाभ्यां तयोरग्रं संङ्गृह्य ऊर्ध्वाग्रेऽनम्रीकृत्य धारयन्नेवाज्ये प्रक्षिप्याज्यस्यात्पवनं कुर्यादुच्छालयेत्। तत आज्यमवेक्ष्य सत्यपद्रव्ये तन्निरस्येत्। ततः पूर्ववत् पवित्रे गृहीत्वाप्रोक्षणीनामपामुत्पवनं कुर्यात्। ततो वामहस्ते उपयमनादाय दक्षिणेन प्रादेशमात्रीः पालाशीस्तिस्त्रःसमिधो घृताक्ता द्व्यङ्गुलादूर्ध्वं मध्यमानामिकांगुष्ठैर्मूलभागे धृतास्तर्जन्यग्रवत्स्थूलास्तन्त्रेणाग्नौतूष्णीं प्रक्षिप्य सपवित्रेण प्रोक्षण्युदकेन चुलुकगृहीतेन ईशानादि प्रदक्षिणमीशानकोणपर्यन्तं पर्युक्ष्य अप्रदक्षिणमीशानकोणपर्यन्तं हस्तं पर्यावर्तयेत्। ततः पवित्रे प्रणीतासु निधाय दक्षिणं जान्वाच्य ब्रह्मणा कुशैरन्वारब्ध उपयमनकुशसहितं प्रसारिताङ्गुलि हस्तं हृदि निधाय दक्षिणहस्तेन मूले चतुरङ्गुल त्यक्त्वा शङ्खसनिभमुद्रया स्रुवं गृहीत्वा समिद्धतमेऽग्नौ वायव्य कोणादारभ्याग्निकोणपर्यन्तं प्राञ्चं वा सन्तघृतधारया मनसा प्रजापतिं ध्यायन् स्रुवेण तुष्णीं सशेषं मौनी जुहुयात्। नात्र स्वाहाकारः। इदं प्रजापतये न मम इति कर्त्रा त्यागः कर्तव्यः। होमत्यागानन्तरं स्रुवावशिष्टस्याज्यस्य सर्वत्र प्रोक्षणीपात्रे प्रक्षेपः कार्यः। ततो निर्ऋतिकोणादारभ्येशानकोणपर्यन्तं प्राञ्चं वा—ॐ इन्द्राय स्वाहा इति जुहुयात्। 'इदमिन्द्राय

न मम' इति त्यजेत्। तत उत्तरपूर्वार्द्धे-ॐ अग्नये स्वाहा इदमग्नये न मम इति हुत्वा दक्षिण-पूर्वार्द्धे-ॐ सोमाय स्वाहा-इदं सोमाय न मम इति जुहुयात्।

संकल्प-अस्मिन् होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणि इमानि हवन-नीय द्रव्याणि या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तानि न मम। यथा दैवतानि सन्तु॥

## वराहुतिः

आचार्य और ब्राह्मण निम्न दो मन्त्रों का क्रम से उच्चारण करते हुए हवनकुण्ड में गणेश और गौरी के लिये कर्ता से वराहुति प्रदान करवायें-

ॐ गणानां त्वा गणपतिर्ठ० हवामहे प्रियाणां त्वा प्रियपतिर्ठ० हवामहे निधीनां त्वा निधीपतिर्ठ० हवामहे वसो मम। आहमजानि गर्भधमात्वमजासि गर्भधम् स्वाहा॥

ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् स्वाहा॥

## आवाहितदेवतानां हवनम्

### नवग्रहहोममन्त्राः

ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् सूर्याय स्वाहा॥ १॥

ॐ इमं देवाऽअसपत्नर्ठ० सुवद्ध्वं महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय। इममपुष्य पुत्रममुष्यै पुत्रमस्यै विशऽएष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानार्ठ० राजा सोमाय स्वाहा॥ २॥

ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्। अपार्ठ० रेतार्ठ०सि जिन्वति भौमाय स्वाहा॥ ३॥

ॐ उद्‌बुध्यस्वाग्ने प्रतिजागृहि त्वमिष्टापूर्तेसर्ठ० सृजेथामयं च। अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् विश्वेदेवा यजमानश्च सीदत बुधाय स्वाहा॥ ४॥

ॐ बृहस्पते अति यदर्यो अर्हाद्युमद्विभातिक्रतुमज्जनेषु। यद्दीदयच्छवस ऽऋतप्रजात तदस्मासु द्रविणं धेहि चित्रम् बृहस्पतये स्वाहा॥ ५॥

ॐ अन्नात्परिस्रुतो रसं ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमं प्रजापतिः। ऋतेन सत्त्यमिन्द्रियं विपानर्ठ० शुक्रमन्धस ऽइन्द्रस्येन्द्रियमिदं पयोऽमृतं मधु शुक्राय स्वाहा॥ ६॥

ॐ शं नो देवीरभिष्टय आपो भवन्तु पीतये शंयोरभिस्रवन्तु नः शनैश्चराय स्वाहा॥ ७॥

ॐ कयानश्चित्रऽआभुवदूती सदावृधः सखा। कया शचिष्ठया वृता राहवे स्वाहा॥ ८॥

ॐ केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे समुषद्भिर-जायथाः केतुवे स्वाहा॥ ९॥

अथाधिदेवता-प्रत्यधिदेवता-पञ्चलोकपालहोममन्त्राः

ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्नमृत्योर्मुक्षीय मा ऽमृतात् ईश्वराय स्वाहा॥ १॥

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णनिषाणामुं म ऽइषाण सर्वलोकं म इषाण उमायै स्वाहा॥ २॥

ॐ यदक्रन्दः प्रथमं जायमान ऽउद्यन्त्समुद्रादुत वा पुरीषात्। श्येनस्य पक्षा हरिणस्य बाहू उपस्तुयं महि जातं ते ऽअर्वन् स्कन्दाय स्वाहा॥ ३॥

ॐ विष्णोर राटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि वैष्णवमसि विष्णवे त्वा विष्णवे स्वाहा॥ ४॥

ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामा राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायतां दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णु रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायतां निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ब्रह्मणे स्वाहा॥ ५॥

ॐ सजोषा इन्द्र सगणो मरुद्भिः सोमं पिब वृत्रहा शूर विद्वान्। जहि शत्रूंर्ठ०२॥ रप मृधो नुदस्वाथाभयं कृणुहि विश्वतो नः इन्द्राय स्वाहा॥ ६॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे यमाय स्वाहा॥ ७॥

ॐ कार्षिरसि समुद्रस्य त्वाक्षित्या उन्नयामि। समापो अद्भिरग्मत समोषधीभिरोषधीः कालाय स्वाहा॥ ८॥

ॐ चित्रावसो स्वस्ति ते पारमशीय चित्रगुप्ताय स्वाहा॥ ९॥

ॐ अग्निं दूतं पुरो दधे हव्यवाहमुप ब्रुवे। देवाँ२॥ आसादयादिह अग्नये स्वाहा॥ १॥

ॐ आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महेरणाय चक्षसे अद्भ्यो स्वाहा॥ २॥

ॐ स्योना पृथिवी नो भवानृक्षरा निवेशनी। यच्छा नः शर्म सप्रथाः पृथिव्यै स्वाहा॥ ३॥

ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्। समूढमस्य-पार्ठ० सुरे विष्णवे स्वाहा॥ ४॥

ॐ इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः। देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् इन्द्राय स्वाहा॥ ५॥

ॐ अदित्यै रास्नासीन्द्राण्या उष्णीषः। पूषासि घर्माय दीष्व इन्द्राण्यै स्वाहा॥ ६॥

ॐ प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वयममुष्य पितासावस्य पिता वयठं० स्याम पतयो रयीणाम् प्रजापतये स्वाहा॥ ७॥

ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवी मनु। ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः सर्पेभ्यो स्वाहा॥ ८॥

ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ब्रह्मणे स्वाहा॥ ९॥

ॐ गणानां त्वा गणपतिठं० हवामहे प्रियाणां त्वा प्रियपतिठं० हवामहे निधीनां त्वा निधिपतिठं० हवामहे वसो मम। आहमजानि गर्भधमा त्वमजासि गर्भधम् गणपतये स्वाहा॥ १॥

ॐ अम्बे अम्बिकेऽम्बालिके न मा नयति कश्चन। ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् दुर्गायै स्वाहा॥ २॥

ॐ वायो ये ते सहस्त्रिणो रथासस्तेभिरागहि। नियुत्वान् सोमपीतये वायवे स्वाहा॥ ३॥

ॐ घृतं घृतपावनः पिबत वसां वसापावानः पिबतान्तरिक्षस्य हविरसि स्वाहा। दिशः प्रदिश आदिशो विदिश उद्दिशो दिग्भ्यः आकाशाय स्वाहा॥ ४॥

ॐ या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतम् अश्विनौ स्वाहा॥ ५॥

अथ वास्तु-क्षेत्रपाल-दशदिक्पालहोममन्त्राः

ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो ऽअनमीवा भवो नः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे वास्तोष्पतये स्वाहा॥ १॥

ॐ नहि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुरएतारमग्नेः। एमेन-मवृधन्नमृता अमर्त्यं वैश्वानर क्षैत्रजित्याय देवाः क्षेत्राधिपतये स्वाहा॥ २॥

ॐ त्रातारमिन्द्रमवितारमिंन्द्रर्ठ० हवे हवे सुहवर्ठ० शूरमिन्द्रम्। ह्वयामि शक्रं पुरुहूतमिन्द्रर्ठ० स्वस्ति नो मघवा धात्विन्द्रः इन्द्राय स्वाहा॥ १॥

ॐ त्वं नो अग्ने तव देव पायुभिर्मघोनो रक्ष तन्वश्च वन्द्य। त्राता तोकस्य तनये गवामस्य निमेषर्ठ० रक्षमाणस्तव व्रते अग्नये स्वाहा॥ २॥

ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा। स्वाहा घर्माय स्वाहा घर्मः पित्रे यमाय स्वाहा॥ ३॥

ॐ असुन्वन्तमयजमानमिच्छ स्तेनस्येत्यामन्विहि तस्करस्य। अन्यमस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु निर्ऋतये स्वाहा॥ ४॥

ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ०स मा न आयुः प्रमोषीः वरुणाय स्वाहा॥ ५॥

ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्त्रिणीभि-रुपयाहि यज्ञम्। वायो अस्मिन्सवने मादयस्व यूयं पात स्वस्तिभिः सदा नः वायवे स्वाहा॥ ६॥

ॐ वयꣳ सोम व्रते तव मनस्तनूषु बिभ्रत। प्रजावन्तः सचेमाहि सोमाय स्वाहा॥ ७॥

ॐ तमीशानं जगतस्तस्थुषस्पतिं धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ईशानाय स्वाहा॥ ८॥

ॐ अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः। यः शꣳसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ२॥ अवन्तु देवाः ब्रह्मणे स्वाहा॥ ९॥

ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनि। यच्छा नः शर्म सप्रथाः अनन्ताय स्वाहा॥ १०॥

(अथवा)

## केवलं नामाऽनुक्रमेण आवाहितदेवतानां हवनम्

ॐ सूर्याय स्वाहा, सोमाय स्वाहा, भौमाय स्वाहा, बुद्धाय स्वाहा, बृहस्पतये स्वाहा, शुक्राय स्वाहा, शनिश्चराय स्वाहा, राहवे स्वाहा, केतुवे स्वाहा, ईश्वराय स्वाहा, उमायै स्वाहा, स्कन्दाय स्वाहा, विष्णवे स्वाहा, ब्रह्मणे स्वाहा, इन्द्राय स्वाहा, यमाय स्वाहा, कालाय स्वाहा, चित्रगुप्ताय स्वाहा, अग्नये स्वाहा, अद्भ्यो स्वाहा, पृथिव्यै स्वाहा, विष्णवे स्वाहा, इन्द्राय स्वाहा, इन्द्राण्यै स्वाहा, प्रजापतये स्वाहा, सर्पेभ्यो स्वाहा, ब्रह्मणे स्वाहा, गणपतये स्वाहा, दुर्गायै स्वाहा, वायवे स्वाहा, आकाशाय स्वाहा, अश्विनौ स्वाहा, वास्तोष्पतये स्वाहा, क्षेत्राधिपतये स्वाहा, इन्द्राय स्वाहा, अग्नये स्वाहा, यमाय स्वाहा, निर्ऋतये स्वाहा, वरुणाय स्वाहा, वायवे स्वाहा, सोमाय स्वाहा, ईशानाय स्वाहा, ब्रह्मणे स्वाहा, अनन्ताय स्वाहा।

---

## प्रधानहोमः

### ( श्रीसन्तानगोपालमन्त्रहवनम् )

विनियोगः—ॐ अस्य श्रीसन्तानगोपालमन्त्रस्य श्रीनारद ऋषिः, अनुष्टुप् छन्दः, श्रीकृष्णो देवताः ग्लौं बीजम्, नमः शक्तिः, पुत्रार्थे होमे विनियोगः।

अङ्गन्यासः—'देवकीसुत गोविन्द' हृदयाम् नमः। 'देहि मे तनयं कृष्ण' शिखायै वषट्। 'त्वामहं शरणं गतः' कवचाय हुम्। 'देवकीसुत गोविन्द वासुदेव जगत्पते। देहि मे तनयं कृष्ण त्वामहं शरणं गतः।' अस्त्राय फट्।

ध्यानम्

शङ्ख-चक्र-गदा-पद्मं धारयन्तं जनार्दनम्।
अङ्के शयानं देवक्याः सूतिकामन्दिरे शुभे॥
एवं रूपं सदा कृष्ण सुतार्थं भावयेत् सुधीः॥

हवनमन्त्रः

आचार्य हवनात्मक सन्तानगोपालअनुष्ठान में निम्न मन्त्र का उच्चारण करके एक लाख सोलह हजार अथवा सोलह हजार आहुति प्रदान करावें—

ॐ देवकीसुत गोविन्द वासुदेव जगत्पते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः स्वाहा॥

## श्रीसन्तानगोपालसहस्त्रनामावल्याः हवनविधिः

विनियोगः—ॐ अस्य श्रीगोपालसहस्त्रनामस्तोत्रमन्त्रस्य नारद ऋषिः, अनुष्टुप् छन्दः, श्रीगोपालो देवता, कामो बीजम्, मायाशक्तिः, चन्द्रः कीलकम्, श्रीकृष्णचन्द्रभक्तिजन्यफलप्राप्तये श्रीगोपालसहस्त्रनामभिरमुकद्रव्यैः हवने विनियोगः।

न्यासः—ॐ नारदऋषये नमः, शिरसि। अनुष्टुप् छन्दसे नमः, मुखे। श्रीगोपालदेवतायै नमः, हृदये। क्लीं कीलकाय नमः, पादयोः।

करन्यासः—ॐ क्लां अङ्गुष्ठाभ्यां नमः। ॐ क्लीं तर्जनीभ्यां नमः। ॐ क्लूं मध्यमाभ्यां नमः। ॐ क्लैं अनामिकाभ्यां नमः। ॐ क्लौं कनिष्ठिकाभ्यां नमः। ॐ क्लः करतलकरपृष्ठाभ्यां नमः।

अङ्गन्यासः—ॐ क्लां हृदयाय नमः। ॐ क्लीं शिरसे स्वाहा। ॐ क्लूं शिखायै वषट्। ॐ क्लैं कवचाय हुम्। ॐ क्लौं नेत्रत्रयाय वौषट्। ॐ क्लः अस्त्राय फट्।

ध्यानम्

कस्तूरीतिलकं ललाटपटले वक्षःस्थले कौस्तुभं
नासाग्रे वरमौक्तिकं करतले वेणुः करे कङ्कणम्।
सर्वाङ्गे हरिचन्दनं सुललितं कण्ठे च मुक्तावलि-
र्गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः॥ १॥
फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं श्रीवत्साङ्क-
मुदारकौस्तुभधरं पीताम्बरं सुन्दरम्।
गोपीनां नयनोत्पलार्चिचतनुं गोगोपसङ्घावृतं गोविन्दं
कलवेणुवादनपरं दिव्याङ्गभूषं भजे॥ २॥
व्रजे वसन्तं नवनीतचौरं गोपाङ्गनानां च दुकूलचौरम्।
श्रीराधिकाया हृदयस्य चौरं चौराग्रगण्यं पुरुषं नमामि॥ ३॥

आचार्य हवनात्मक श्रीसन्तानगोपालअनुष्ठान में हवन करवाने के लिये पायस—दूध और शक्कर से निर्मित खीर अथवा गौघृत के द्वारा निम्न एक हजार नामों का क्रमानुसार उच्चारण करते हुए कर्ता से हवन करावें—

१. ॐ श्रीगोपालाय स्वाहा
२. ॐ महीपालाय स्वाहा
३. ॐ वेदवेदाङ्गपारगाय स्वाहा
४. ॐ कृष्णाय स्वाहा
५. ॐ कमलपत्राक्षाय स्वाहा
६. ॐ पुण्डरीकाय स्वाहा
७. ॐ सनातनाय स्वाहा
८. ॐ गोपतये स्वाहा
९. ॐ भूपतये स्वाहा
१०. ॐ शास्त्रे स्वाहा
११. ॐ प्रहर्त्रे स्वाहा
१२. ॐ विश्वतोमुखाय स्वाहा
१३. ॐ आदिकर्त्रे स्वाहा
१४. ॐ महाकर्त्रे स्वाहा
१५. ॐ महाकालाय स्वाहा
१६. ॐ प्रजापवते स्वाहा
१७. ॐ जगज्जीवाय स्वाहा
१८. ॐ जगद्धात्रे स्वाहा
१९. ॐ जगद्भर्त्रे स्वाहा
२०. ॐ जगद्वसवे स्वाहा
२१. ॐ मत्स्याय स्वाहा
२२. ॐ भीमाय स्वाहा
२३. ॐ कुहूभर्त्रे स्वाहा
२४. ॐ हर्त्रे स्वाहा
२५. ॐ वाराहमूर्तिमते स्वाहा
२६. ॐ नारायणाय स्वाहा

२७. ॐ हृषीकेशाय स्वाहा
२८. ॐ गोविन्दाय स्वाहा
२९. ॐ गरुडध्वजाय स्वाहा
३०. ॐ गोकुलेन्द्राय स्वाहा
३१. ॐ महीचन्द्राय स्वाहा
३२. ॐ शर्वरीप्रियकारकाय स्वाहा
३३. ॐ कमलामुखलोलाक्षाय स्वा.
३४. ॐ पुण्डरीकाय स्वाहा
३५. ॐ शुभावहाय स्वाहा
३६. ॐ दूर्वाशाय स्वाहा
३७. ॐ कपिलाय स्वाहा
३८. ॐ भौमाय स्वाहा
३९. ॐ सिन्धुसागरसङ्गमाय स्वाहा
४०. ॐ गोविन्दाय स्वाहा
४१. ॐ गोपतये स्वाहा
४२. ॐ गोत्राय स्वाहा
४३. ॐ कालिन्दीप्रेमपूरकाय स्वाहा
४४. ॐ गोस्वामिने स्वाहा
४५. ॐ गोकुलेन्द्राय स्वाहा
४६. ॐ गोगोवर्धनवरप्रदाय स्वाहा
४७. ॐ नन्दादिगोकुलत्रात्रे स्वाहा
४८. ॐ दात्रे स्वाहा
४९. ॐ दारिद्र्यभञ्जनाय स्वाहा
५०. ॐ सर्वमङ्गलदात्रे स्वाहा
५१. ॐ सर्वकामप्रदायकाय स्वाहा
५२. ॐ आदिकर्त्रे स्वाहा
५३. ॐ महीभर्त्रे स्वाहा
५४. ॐ सर्वसागरसिन्धुजाय स्वाहा
५५. ॐ गाजगामिने स्वाहा
५६. ॐ गजोद्धारिणे स्वाहा
५७. ॐ कामिने स्वाहा
५८. ॐ कामकलानिधये स्वाहा
५९. ॐ कलङ्करहिताय स्वाहा
६०. ॐ चन्द्राय स्वाहा
६१. ॐ बिम्बास्याय स्वाहा
६२. ॐ बिम्बसत्तमाय स्वाहा
६३. ॐ मालाकरकृपाकाराय स्वाहा
६४. ॐ कोकिलस्वरभूषणाय स्वाहा
६५. ॐ रामाय स्वाहा
६६. ॐ नीलाम्बराय स्वाहा
६७. ॐ देवाय स्वाहा
६८. ॐ हलिने स्वाहा
६९. ॐ दुर्दममर्दनाय स्वाहा
७०. ॐ सहस्त्राक्षपुरीभेत्त्रे स्वाहा
७१. ॐ महामारीविनाशनाय स्वाहा
७२. ॐ शिवाय स्वाहा
७३. ॐ शिवतमाय स्वाहा
७४. ॐ भेत्त्रे स्वाहा
७५. ॐ बलारातिप्रयोजकाय स्वाहा
७६. ॐ कुमारीवरदायिने स्वाहा
७७. ॐ वरेण्याय स्वाहा
७८. ॐ मीनकेतनाय स्वाहा
७९. ॐ नराय स्वाहा
८०. ॐ नारायणाय स्वाहा
८१. ॐ धीराय स्वाहा
८२. ॐ धारापतये स्वाहा
८३. ॐ उदारधिये स्वाहा
८४. ॐ श्रीपतये स्वाहा
८५. ॐ श्रीनिधये स्वाहा
८६. ॐ श्रीमते स्वाहा
८७. ॐ मापतये स्वाहा
८८. ॐ पतिराजघ्ने स्वाहा
८९. ॐ वृन्दापतये स्वाहा
९०. ॐ कुलाय स्वाहा
९१. ॐ ग्रामिणे स्वाहा
९२. ॐ धाम्ने स्वाहा
९३. ॐ ब्रह्मणे स्वाहा
९४. ॐ सनातनाय स्वाहा

९५. ॐ रेवतीरमणाय स्वाहा
९६. ॐ रामाय स्वाहा
९७. ॐ प्रियाय स्वाहा
९८. ॐ चञ्चललोचनाय स्वाहा
९९. ॐ रामायणशरीराय स्वाहा
१००. ॐ रामिणे स्वाहा
१०१. ॐ रामाय स्वाहा
१०२. ॐ श्रियःपतये स्वाहा
१०३. ॐ शर्वराय स्वाहा
१०४. ॐ शर्वर्यै स्वाहा
१०५. ॐ सर्वाय स्वाहा
१०६. ॐ सर्वत्रशुभदायकाय स्वाहा
१०७. ॐ राधाराधयित्रे स्वाहा
१०८. ॐ राधिने स्वाहा
१०९. ॐ राधाचित्तप्रमोदकाय स्वाहा
११०. ॐ राधारतिसुखोपेताय स्वाहा
१११. ॐ राधामोहनतत्पराय स्वाहा
११२. ॐ राधावशीकराय स्वाहा
११३. ॐ राधाहृदयाम्भोजषट्पदाय स्वाहा
११४. ॐ राधालिङ्गनसम्मोहाय स्वाहा
११५. ॐ राधानर्तनकौतुकाय स्वाहा
११६. ॐ राधासञ्जातसम्प्रीताय स्वाहा
११७. ॐ राधाकामफलप्रदाय स्वाहा
११८. ॐ वृन्दापतये स्वाहा
११९. ॐ कोकनिधये स्वाहा
१२०. ॐ कोकशोकविनाशनाय स्वा.
१२१. ॐ चन्द्रापतये स्वाहा
१२२. ॐ चन्द्रपतये स्वाहा
१२३. ॐ चण्डकोदण्डभञ्जनाय स्वा.
१२४. ॐ रामाय स्वाहा
१२५. ॐ दाशरथये स्वाहा
१२६. ॐ रामाय स्वाहा
१२७. ॐ भृगुवंशसमुद्भवाय स्वाहा
१२८. ॐ आत्मारामाय स्वाहा
१२९. ॐ जितक्रोधाय स्वाहा
१३०. ॐ मोहाय स्वाहा
१३१. ॐ मोहान्धभञ्जनाय स्वाहा
१३२. ॐ वृषभानुभवाय स्वाहा
१३३. ॐ भावाय स्वाहा
१३४. ॐ काश्यपये स्वाहा
१३५. ॐ करुणानिधये स्वाहा
१३६. ॐ कोलाहलाय स्वाहा
१३७. ॐ हलिने स्वाहा
१३८. ॐ हालाय स्वाहा
१३९. ॐ हलिने स्वाहा
१४०. ॐ हलधरप्रियाय स्वाहा
१४१. ॐ राधामुखाब्जमार्तण्डाय स्वा.
१४२. ॐ भास्कराय स्वाहा
१४३. ॐ रविजाय स्वाहा
१४४. ॐ विधवे स्वाहा
१४५. ॐ विधये स्वाहा
१४६. ॐ विधात्रे स्वाहा
१४७. ॐ वरुणाय स्वाहा
१४८. ॐ वारुणाय स्वाहा
१४९. ॐ वारुणीप्रियाय स्वाहा
१५०. ॐ रोहिणीहृदयानन्दिने स्वाहा
१५१. ॐ वसुदेवात्मजाय स्वाहा
१५२. ॐ बलिने स्वाहा
१५३. ॐ नीलाम्बराय स्वाहा
१५४. ॐ रोहिणेयाय स्वाहा
१५५. ॐ जरासन्धवधाय स्वाहा
१५६. ॐ अमलाय स्वाहा
१५७. ॐ नागाय स्वाहा
१५८. ॐ जवाम्भाय स्वाहा
१५९. ॐ विरुदाय स्वाहा
१६०. ॐ विरुहाय स्वाहा
१६१. ॐ वरदाय स्वाहा

१६२. ॐ बलिने स्वाहा
१६३. ॐ गोपथाय स्वाहा
१६४. ॐ विजयिने स्वाहा
१६५. ॐ विदुषे स्वाहा
१६६. ॐ शापिविष्टाय स्वाहा
१६७. ॐ सनातनाय स्वाहा
१६८. ॐ परशुरामवचोग्राहिणे स्वाहा
१६९. ॐ वरग्राहिणे स्वाहा
१७०. ॐ सृगालघ्ने स्वाहा
१७१. ॐ दमघोषोपदेष्ट्रे स्वाहा
१७२. ॐ रथग्राहिणे स्वाहा
१७३. ॐ सुदर्शनाय स्वाहा
१७४. ॐ वीरपत्नीयशस्त्रात्रे स्वाहा
१७५. ॐ जगव्याधिविघातकाय स्वा.
१७६. ॐ द्वारकावासतत्त्वज्ञाय स्वाहा
१७७. ॐ हुताशनवरप्रदाय स्वाहा
१७८. ॐ यमुनावेगसंहारिणे स्वाहा
१७९. ॐ नीलाम्बरधराय स्वाहा
१८०. ॐ प्रभवे स्वाहा
१८१. ॐ विभवे स्वाहा
१८२. ॐ शरासनाय स्वाहा
१८३. ॐ धन्विने स्वाहा
१८४. ॐ गणेशाय स्वाहा
१८५. ॐ गणनायकाय स्वाहा
१८६. ॐ लक्ष्मणाय स्वाहा
१८७. ॐ लक्षणाय स्वाहा
१८८. ॐ लक्षाय स्वाहा
१८९. ॐ रक्षोवंशविनाशनाय स्वाहा
१९०. ॐ वामनाय स्वाहा
१९१. ॐ वामनीभूताय स्वाहा
१९२. ॐ अवामनाय स्वाहा
१९३. ॐ वामनारुहाय स्वाहा
१९४. ॐ यशोदानन्दाय स्वाहा
१९५. ॐ कर्त्रे स्वाहा
१९६. ॐ यमलार्जुनमुक्तिदाय स्वाहा
१९७. ॐ उलूखलिने स्वाहा
१९८. ॐ महामानिने स्वाहा
१९९. ॐ दामबद्धाह्वयिने स्वाहा
२००. ॐ शमिने स्वाहा
२०१. ॐ भक्तानुकारिणे स्वाहा
२०२. ॐ भगवते स्वाहा
२०३. ॐ केशवाय स्वाहा
२०४. ॐ बलधारकाय स्वाहा
२०५. ॐ केशिघ्ने स्वाहा
२०६. ॐ मधुघ्ने स्वाहा
२०७. ॐ मोहिने स्वाहा
२०८. ॐ वृषासुरविधातकाय स्वाहा
२०९. ॐ अघासुरविनाशिने स्वाहा
२१०. ॐ पूतनामोक्षदायकाय स्वाहा
२११. ॐ कुब्जाविनोदिने स्वाहा
२१२. ॐ भगवते स्वाहा
२१३. ॐ कंसमृत्यवे स्वाहा
२१४. ॐ महामखिने स्वाहा
२१५. ॐ अश्वमेधाय स्वाहा
२१६. ॐ वाजपेयाय स्वाहा
२१७. ॐ गोमेधाय स्वाहा
२१८. ॐ नरमेधवते स्वाहा
२१९. ॐ कन्दर्पकोटिलावण्याय स्वाहा
२२०. ॐ चन्द्रकोटिसुशीतलाय स्वाहा
२२१. ॐ रविकोटिप्रतीकाशाय स्वाहा
२२२. ॐ वायुकोटिमहाबलाय स्वाहा
२२३. ॐ ब्रह्मणे स्वाहा
२२४. ॐ ब्रह्माण्डकर्त्रे स्वाहा
२२५. ॐ कमलावाञ्छितप्रदाय स्वाहा
२२६. ॐ कमलिने स्वाहा
२२७. ॐ कमलाक्षाय स्वाहा

२२८. ॐ कमलामुखलोलुपाय स्वाहा
२२९. ॐ कमलाव्रतधारिणे स्वाहा
२३०. ॐ कमलाभाय स्वाहा
२३१. ॐ पुरन्दराय स्वाहा
२३२. ॐ सौभाग्याधिकचित्ताय स्वा.
२३३. ॐ महामायिने स्वाहा
२३४. ॐ महोत्कटाय स्वाहा
२३५. ॐ तारकारये स्वाहा
२३६. ॐ सुरत्रात्रे स्वाहा
२३७. ॐ मारीचक्षोभकारकाय स्वाहा
२३८. ॐ विश्वामित्रप्रियाय स्वाहा
२३९. ॐ दान्ताय स्वाहा
२४०. ॐ रामाय स्वाहा
२४१. ॐ राजीवलोचनाय स्वाहा
२४२. ॐ लङ्काधिपकुलध्वंसिने स्वा.
२४३. ॐ विभीषणवरप्रदाय स्वाहा
२४४. ॐ सीतानन्दकराय स्वाहा
२४५. ॐ रामाय स्वाहा
२४६. ॐ वाराय स्वाहा
२४७. ॐ वारिधिबन्धनाय स्वाहा
२४८. ॐ खरदूषणसंहारिणे स्वाहा
२४९. ॐ साकेतपुरवासवते स्वाहा
२५०. ॐ चन्द्रावलापतये स्वाहा
२५१. ॐ कलाय स्वाहा
२५२. ॐ केशिकंसवधाय स्वाहा
२५३. ॐ अमलाय स्वाहा
२५४. ॐ माधवाय स्वाहा
२५५. ॐ मधुघ्ने स्वाहा
२५६. ॐ माध्विने स्वाहा
२५७. ॐ माध्वीकाय स्वाहा
२५८. ॐ माधवीविभवे स्वाहा
२५९. ॐ मुञ्जाटवीगाहमानाय स्वाहा
२६०. ॐ धेनुकारये स्वाहा
२६१. ॐ धरात्मजाय स्वाहा
२६२. ॐ वंशीवटविहारिणे स्वाहा
२६३. ॐ गोवर्धनवनाश्रयाय स्वाहा
२६४. ॐ तालवनोद्देशिने स्वाहा
२६५. ॐ भाण्डीरवनशङ्खघ्ने स्वाहा
२६६. ॐ तृणावर्तकृपाकारिणे स्वाहा
२६७. ॐ वृषभानुसुतापतये स्वाहा
२६८. ॐ राधाप्राणसमाय स्वाहा
२६९. ॐ राधावदनाब्जमधुव्रताय स्वाहा
२७०. ॐ गोपीरञ्जनदैवज्ञाय स्वाहा
२७१. ॐ लीलाकमलपूजिताय स्वाहा
२७२. ॐ क्रीडाकमलसन्दोहाय स्वा.
२७३. ॐ गोपिकाप्रीतिरञ्जनाय स्वाहा
२७४. ॐ रञ्जकाय स्वाहा
२७५. ॐ रञ्जनाय स्वाहा
२७६. ॐ रङ्गाय स्वाहा
२७७. ॐ रङ्गिणे स्वाहा
२७८. ॐ रङ्गमहीरुहाय स्वाहा
२७९. ॐ कामाय स्वाहा
२८०. ॐ कामारिभक्ताय स्वाहा
२८१. ॐ पुराणपुरुषाय स्वाहा
२८२. ॐ कवये स्वाहा
२८३. ॐ नारदाय स्वाहा
२८४. ॐ देवलाय स्वाहा
२८५. ॐ भीमाय स्वाहा
२८६. ॐ बालाय स्वाहा
२८७. ॐ बालमुखाम्बुजाय स्वाहा
२८८. ॐ अम्बुजाय स्वाहा
२८९. ॐ ब्रह्मणे स्वाहा
२९०. ॐ साक्षिणे स्वाहा
२९१. ॐ योगिने स्वाहा
२९२. ॐ दत्तवराय स्वाहा
२९३. ॐ मुनये स्वाहा
२९४. ॐ ऋषभाय स्वाहा

२९५. ॐ पर्वताय स्वाहा
२९६. ॐ ग्रामाय स्वाहा
२९७. ॐ नदीपवनवल्लभाय स्वाहा
२९८. ॐ पद्मनाभाय स्वाहा
२९९. ॐ सुरज्येष्ठाय स्वाहा
३००. ॐ ब्रह्मणे स्वाहा
३०१. ॐ रुद्राय स्वाहा
३०२. ॐ अहिभूषिताय स्वाहा
३०३. ॐ गणानांत्राणकर्त्रे स्वाहा
३०४. ॐ गणेशाय स्वाहा
३०५. ॐ ग्रहिलाय स्वाहा
३०६. ॐ ग्रहिणे स्वाहा
३०७. ॐ गणाश्रयाय स्वाहा
३०८. ॐ गणाध्यक्षाय स्वाहा
३०९. ॐ क्रोडीकृतजगत्त्रयाय स्वाहा
३१०. ॐ यादवेन्द्राय स्वाहा
३११. ॐ द्वारकेन्द्राय स्वाहा
३१२. ॐ मथुरावल्लभाय स्वाहा
३१३. ॐ धुरिणे स्वाहा
३१४. ॐ भ्रमराय स्वाहा
३१५. ॐ कुन्तलिने स्वाहा
३१६. ॐ कुन्तीसुतरक्षिणे स्वाहा
३१७. ॐ महामखिने स्वाहा
३१८. ॐ यमुनावरदात्रे स्वाहा
३१९. ॐ काश्यपस्य वरप्रदाय स्वाहा
३२०. ॐ शङ्खचूडवधोद्यताय स्वाहा
३२१. ॐ गोपीरक्षणतत्पराय स्वाहा
३२२. ॐ पाञ्चजन्यकराय स्वाहा
३२३. ॐ रामिणे स्वाहा
३२४. ॐ त्रिरामिणे स्वाहा
३२५. ॐ वनजाय स्वाहा
३२६. ॐ जयाय स्वाहा
३२७. ॐ फाल्गुनाय स्वाहा
३२८. ॐ फाल्गुनसखाय स्वाहा
३२९. ॐ विराधवधकारकाय स्वाहा
३३०. ॐ रुक्मिणीप्राणनाथाय स्वाहा
३३१. ॐ सत्यभामाप्रियङ्कराय स्वाहा
३३२. ॐ कल्पवृक्षाय स्वाहा
३३३. ॐ महावृक्षाय स्वाहा
३३४. ॐ दानवृक्षाय स्वाहा
३३५. ॐ महाफलाय स्वाहा
३३६. ॐ अङ्कुशाय स्वाहा
३३७. ॐ भूसुराय स्वाहा
३३८. ॐ भामाय स्वाहा
३३९. ॐ भामकाय स्वाहा
३४०. ॐ भ्रामकाय स्वाहा
३४१. ॐ हरये स्वाहा
३४२. ॐ सरलाय स्वाहा
३४३. ॐ शाश्वताय स्वाहा
३४४. ॐ वीराय स्वाहा
३४५. ॐ यदुवंशिने स्वाहा
३४६. ॐ शिवात्मकाय स्वाहा
३४७. ॐ प्रद्युम्नाय स्वाहा
३४८. ॐ बलकर्त्रे स्वाहा
३४९. ॐ प्रहर्त्रे स्वाहा
३५०. ॐ दैत्यघ्ने स्वाहा
३५१. ॐ प्रभवे स्वाहा
३५२. ॐ महाधनाय स्वाहा
३५३. ॐ महावीराय स्वाहा
३५४. ॐ वनमालाविभूषणाय स्वाहा
३५५. ॐ तुलसीदामशोभाढ्याय स्वा.
३५६. ॐ जलन्धरविनाशनाय स्वाहा
३५७. ॐ शूराय स्वाहा
३५८. ॐ सूर्याय स्वाहा
३५९. ॐ अमृताण्डाय स्वाहा
३६०. ॐ भास्कराय स्वाहा
३६१. ॐ विश्वपूजिताय स्वाहा
३६२. ॐ रवये स्वाहा

३६३. ॐ तमोघ्ने स्वाहा
३६४. ॐ वह्नये स्वाहा
३६५. ॐ वाडवाय स्वाहा
३६६. ॐ वडवानलाय स्वाहा
३६७: ॐ दैत्यदर्पविनाशिने स्वाहा
३६८. ॐ गरुडाय स्वाहा
३६९. ॐ गरुडाग्रजाय स्वाहा
३७०. ॐ गोपीनाथाय स्वाहा
३७१. ॐ महीनाथाय स्वाहा
३७२. ॐ वृन्दानाथाय स्वाहा
३७३. ॐ विरोधकाय स्वाहा
३७४. ॐ प्रपञ्चिने स्वाहा
३७५. ॐ पञ्चरूपाय स्वाहा
३७६. ॐ लतायै स्वाहा
३७७. ॐ गुल्माय स्वाहा
३७८. ॐ गोपतये स्वाहा
३७९. ॐ गङ्गायै स्वाहा
३८०. ॐ यमुनारूपाय स्वाहा
३८१. ॐ गोदायै स्वाहा
३८२. ॐ वेत्रवत्यै स्वाहा
३८३. ॐ कावेर्य्यै स्वाहा
३८४. ॐ नर्मदायै स्वाहा
३८५. ॐ ताप्यै स्वाहा
३८६. ॐ गण्डक्यै स्वाहा
३८७. ॐ सरय्वै स्वाहा
३८८. ॐ रजाय स्वाहा
३८९. ॐ राजसाय स्वाहा
३९०. ॐ तामसाय स्वाहा
३९१. ॐ सात्त्विने स्वाहा
३९२. ॐ सर्वाङ्गिणे स्वाहा
३९३. ॐ सर्वलोचनाय स्वाहा
३९४. ॐ सुधामयाय स्वाहा
३९५. ॐ अमृतमयाय स्वाहा
३९६. ॐ योगिनीवल्लभाय स्वाहा
३९७. ॐ शिवाय स्वाहा
३९८. ॐ बुद्धाय स्वाहा
३९९. ॐ बुद्धिमतां श्रेष्ठाय स्वाहा
४००. ॐ विष्णवे स्वाहा
४०१. ॐ जिष्णवे स्वाहा
४०२. ॐ शचीपतये स्वाहा
४०३. ॐ वंशिने स्वाहा
४०४. ॐ वंशधराय स्वाहा
४०५. ॐ लोकाय स्वाहा
४०६. ॐ विलोकाय स्वाहा
४०७. ॐ मोहनाशनाय स्वाहा
४०८. ॐ रवरावाय स्वाहा
४०९. ॐ रवाय स्वाहा
४१०. ॐ रावाय स्वाहा
४११. ॐ बलाय स्वाहा
४१२. ॐ बालाय स्वाहा
४१३. ॐ बलाहकाय स्वाहा
४१४. ॐ शिवाय स्वाहा
४१५. ॐ रुद्राय स्वाहा
४१६. ॐ नलाय स्वाहा
४१७. ॐ नीलाय स्वाहा
४१८. ॐ लाङ्गुलिने स्वाहा
४१९. ॐ लङ्गलाश्रयाय स्वाहा
४२०. ॐ पारदाय स्वाहा
४२१. ॐ पावनाय स्वाहा
४२२. ॐ हंसाय स्वाहा
४२३. ॐ हंसारूढाय स्वाहा
४२४. ॐ जगत्पतये स्वाहा
४२५. ॐ मोहिनीमोहनाय स्वाहा
४२६. ॐ मायायै स्वाहा
४२७. ॐ महामायिने स्वाहा
४२८. ॐ महासुखिने स्वाहा
४२९. ॐ वृषाय स्वाहा
४३०. ॐ वृषाकपये स्वाहा

४३१. ॐ कालाय स्वाहा
४३२. ॐ कालीदमनकारकाय स्वाहा
४३३. ॐ कुब्जाभाग्यप्रदाय स्वाहा
४३४. ॐ वीराय स्वाहा
४३५. ॐ रजकक्षयकारकाय स्वाहा
४३६. ॐ कोमलाय स्वाहा
४३७. ॐ वारुणाय स्वाहा
४३८. ॐ राज्ञे स्वाहा
४३९. ॐ जलजाय स्वाहा
४४०. ॐ जलधारकाय स्वाहा
४४१. ॐ हारकाय स्वाहा
४४२. ॐ सर्वपापघ्नाय स्वाहा
४४३. ॐ परमेष्ठिने स्वाहा
४४४. ॐ पितामहाय स्वाहा
४४५. ॐ खड्गधारिणे स्वाहा
४४६. ॐ कृपाकारिणे स्वाहा
४४७. ॐ राधारमणसुन्दराय स्वाहा
४४८. ॐ द्वादशारण्यसंभोगिने स्वाहा
४४९. ॐ शेषनागफणालयाय स्वाहा
४५०. ॐ कामाय स्वाहा
४५१. ॐ श्यामाय स्वाहा
४५२. ॐ सुखश्रीदाय स्वाहा
४५३. ॐ प्रीहाय स्वाहा
४५४. ॐ प्रीदाय स्वाहा
४५५. ॐ पत्ये स्वाहा
४५६. ॐ कृतिने स्वाहा
४५७. ॐ हरये स्वाहा
४५८. ॐ नारायणाय स्वाहा
४५९. ॐ नाराय स्वाहा
४६०. ॐ नरोत्तमाय स्वाहा
४६१. ॐ इषुप्रियाय स्वाहा
४६२. ॐ गोपालीचित्तहर्त्रे स्वाहा
४६३. ॐ कर्त्रे स्वाहा
४६४. ॐ संसारतारकाय स्वाहा
४६५. ॐ आदिदेवाय स्वाहा
४६६. ॐ महादेवाय स्वाहा
४६७. ॐ गौरीमुखे स्वाहा
४६८. ॐ अनाश्रयाय स्वाहा
४६९. ॐ साधवे स्वाहा
४७०. ॐ माधवे स्वाहा
४७१. ॐ विधवे स्वाहा
४७२. ॐ धार्त्रे स्वाहा
४७३. ॐ त्रात्रे स्वाहा
४७४. ॐ अक्रूरपरायणाय स्वाहा
४७५. ॐ रोलम्बिने स्वाहा
४७६. ॐ हयग्रीवाय स्वाहा
४७७. ॐ वानरारये स्वाहा
४७८. ॐ वनाश्रयाय स्वाहा
४७९. ॐ वनाय स्वाहा
४८०. ॐ वनिने स्वाहा
४८१. ॐ वनाध्यक्षाय स्वाहा
४८२. ॐ महावन्द्याय स्वाहा
४८३. ॐ महामुनये स्वाहा
४८४. ॐ समयन्तकमणिप्राज्ञाय स्वाहा
४८५. ॐ विज्ञाय स्वाहा
४८६. ॐ विघ्नविघातकाय स्वाहा
४८७. ॐ गोवर्द्धनाय स्वाहा
४८८. ॐ वर्द्धनीयाय स्वाहा
४८९. ॐ वर्द्धनीवर्द्धनप्रियाय स्वाहा
४९०. ॐ वर्द्धन्याय स्वाहा
४९१. ॐ वर्द्धनाय स्वाहा
४९२. ॐ वर्द्धिने स्वाहा
४९३. ॐ वर्द्धिष्णवे स्वाहा
४९४. ॐ सुमुखप्रियाय स्वाहा
४९५. ॐ वर्द्धिताय स्वाहा
४९६. ॐ वृद्धकाय स्वाहा
४९७. ॐ वृद्धाय स्वाहा
४९८. ॐ वृन्दारकजनप्रियाय स्वाहा

४९९. ॐ गोपालरमणीभर्त्रे स्वाहा
५००. ॐ साम्बकुष्ठविनाशनाय स्वाहा
५०१. ॐ रुक्मिणीहरणप्रेम्णे स्वाहा
५०२. ॐ प्रेमिणे स्वाहा
५०३. ॐ चन्द्रावलीपतये स्वाहा
५०४. ॐ श्रीकर्त्रे स्वाहा
५०५. ॐ विश्वभर्त्रे स्वाहा
५०६. ॐ नराय स्वाहा
५०७. ॐ नारायणाय स्वाहा
५०८. ॐ बलिने स्वाहा
५०९. ॐ गणाय स्वाहा
५१०. ॐ गणपतये स्वाहा
५११. ॐ दत्तात्रेयाय स्वाहा
५१२. ॐ महामुनये स्वाहा
५१३. ॐ व्यासाय स्वाहा
५१४. ॐ नारायणाय स्वाहा
५१५. ॐ दिव्याय स्वाहा
५१६. ॐ भव्याय स्वाहा
५१७. ॐ भावुकधारकाय स्वाहा
५१८. ॐ स्वर्स्वाहा
५१९. ॐ श्रेयसे स्वाहा
५२०. ॐ शाय स्वाहा
५२१. ॐ शिवाय स्वाहा
५२२. ॐ भद्राय स्वाहा
५२३. ॐ भावुकाय स्वाहा
५२४. ॐ भविकाय स्वाहा
५२५. ॐ शुभाय स्वाहा
५२६. ॐ शुभात्मकाय स्वाहा
५२७. ॐ शुभाय स्वाहा
५२८. ॐ शास्त्रे स्वाहा
५२९. ॐ प्रशस्ताय स्वाहा
५३०. ॐ मेघनादघ्ने स्वाहा
५३१. ॐ ब्रह्मण्यदेवाय स्वाहा
५३२. ॐ दीनानामुद्धारकरणक्षमाय स्वाहा
५३३. ॐ कृष्णाय स्वाहा
५३४. ॐ कमलपत्राक्षाय स्वाहा
५३५. ॐ कृष्णाय स्वाहा
५३६. ॐ कमललोचनाय स्वाहा
५३७. ॐ कृष्णाय स्वाहा
५३८. ॐ कामिने स्वाहा
५३९. ॐ सदाकृष्णाय स्वाहा
५४०. ॐ समस्तप्रियकारकाय स्वाहा
५४१. ॐ नन्दाय स्वाहा
५४२. ॐ नन्दिने स्वाहा
५४३. ॐ महानादिने स्वाहा
५४४. ॐ मादिने स्वाहा
५४५. ॐ मादनकाय स्वाहा
५४६. ॐ किलिने स्वाहा
५४७. ॐ सिलिने स्वाहा
५४८. ॐ हिलिने स्वाहा
५४९. ॐ गिलिने स्वाहा
५५०. ॐ गोलिने स्वाहा
५५१. ॐ गोलाय स्वाहा
५५२. ॐ गोलालयाय स्वाहा
५५३. ॐ अङ्गुलिने स्वाहा
५५४. ॐ गुग्गुलिने स्वाहा
५५५. ॐ मारकिने स्वाहा
५५६. ॐ शाखिने स्वाहा
५५७. ॐ वटाय स्वाहा
५५८. ॐ पिप्पलकाय स्वाहा
५५९. ॐ कृतिने स्वाहा
५६०. ॐ म्लेच्छघ्ने स्वाहा
५६१. ॐ कालहर्त्रे स्वाहा
५६२. ॐ यशोदायशसे स्वाहा
५६३. ॐ अच्युताय स्वाहा
५६४. ॐ केशवाय स्वाहा
५६५. ॐ विष्णवे स्वाहा
५६६. ॐ हरये स्वाहा

सिन्धोरिव प्राध्वने शूघनासो वातप्रमियः पतयन्ति यह्वाः। घृतस्य धारा अरुषो न वाजी काष्ठा भिन्दन्नूर्मिभिः पिन्वमानः॥ ७॥

अभिप्रवन्त समनेव योषाः कल्याण्यः स्मयमानासोअग्निम्। घृतस्य धाराः समिधो नसन्त ता जुषाणो हर्यति जातवेदाः॥ ८॥

कन्या इव वहतुमेतवा उ अञ्ज्यञ्जाना अभिचाकशीमि। यत्र सोमः सूयते यत्र यज्ञो घृतस्य धारा अभि तत्पवन्ते॥ ९॥

अभ्यर्षत सुष्टुतिं गव्यमाजिमस्मासु भद्रा द्रविणानि धत्त। इमं यज्ञं नयत देवता नो घृतस्य धारा मधुमत्पवन्ते॥ १०॥

धामन्ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि। अपामनीके समिथे य आभृतस्तमश्याम मधुमन्तं त ऊर्मिम्॥ ११॥

पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः॥ १२॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्। कविर्ठ० सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः॥ १३॥

पूर्णा दर्वि परापत सुपूर्णा पुनरापत। वस्नेव विक्रीणावहा इषमूर्जर्ठ० शतक्रतो॥ १४॥

---

## वसोर्धाराहवनम्

कर्ता से वसोर्धाराहोम के लिए आचार्य यह संकल्प करावें—देशकालौ संकीर्त्य, कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मण: साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च वसोर्द्धारां होष्यामि।

इति सङ्कल्प्य कुण्डोपरि वसोर्द्धारां प्रागग्रां निधाय तदुपरि घृतपूरितेन ताम्रादिपात्रधृतेनाधोयवमात्रछिद्रेणाज्यं विमुञ्चतोऽग्नेरुपरि वसोर्द्धारां पातयेत्। वसोर्द्धाराया: मुखं सुवर्णनिर्मितजिह्वां बध्नीयात्। तस्यां च घृतधारायां पतन्त्यां स्रुक्प्रणालिकयाऽग्नौ पतन्त्यां इमान् मन्त्रान् पठेत्।

ॐ सप्त ते अग्ने समिध: सप्त जिह्वा: सप्त ऋषय: सप्त धाम प्रियाणि। सप्त होत्रा: सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा॥ १॥

शुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्मांश्च। शुक्रश्च ऋतपाश्चात्यर्ठ० हा:॥ २॥

ईदृङ् चान्यादृङ् च सदृङ् च प्रतिसदृङ्। मितश्च संमितश्च सभरा:॥ ३॥

ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धर्ता च विधर्ता च विधारय:॥ ४॥

ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च। अन्तिमित्रश्च दूरेअमित्रश्च गण:॥ ५॥

ईदृक्षास एतादृक्षासऽऊषणु: सदृक्षास: प्रतिसदृक्षास एतन। मितासश्च संमितासो नो अद्य सभरसो मरुतो यज्ञे अस्मिन्॥ ६॥

स्वतवांश्च प्रघासी च सान्तपनश्च गृहमेधी च। क्रीडी च शाकी चोज्जेषी॥ ७॥

इन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रं दैवीर्विशो मरुतोऽनुवर्त्मानोऽभवन्। एवमिमं यजमानं दैविश्च विशो मानुषीश्चानुवर्त्मानो भवन्तु॥ ८॥

इमर्ठ० स्तनमूर्जस्वन्तं धयापां प्रपीनमग्ने सरिरस्य मध्ये। उत्सं जुषस्व मधुमन्तमर्वन्समुद्रियर्ठ० सदनमाविशस्व॥ ९॥

घृतं मिमिक्षे घृतमस्य योनिर्घृते श्रितो घृतम्वस्य धाम। अनुष्वधमावह मादयस्व स्वाहाकृतं वृषभ वक्षि हव्यम्॥ १०॥

ॐ कृष्णोऽस्याखरेष्ठोऽग्नये त्वा जुष्टं प्रोक्षामि वेदिरसि बर्हिषे त्वा जुष्टं प्रोक्षामि बर्हिरसि स्रुग्भ्यस्त्वा जुष्टं प्रोक्षामि॥

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्। स भूमिर्ठ० सर्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥ १॥ पुरुष एवेदर्ठ० सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ २॥ एतावानस्य महिमातो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ ३॥ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः। ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥ ४॥ ततो विराडजायत विराजो अधि पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ ५॥ तस्माद्यज्ञात्सर्वहुतः सम्भृतं पृषदाज्यम्। पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥ ६॥ तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दार्ठ०सि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ ७॥ तस्मादश्वा अजायन्त ये के चोभयादतः। गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः॥ ८॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ९॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥ १०॥ ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः। ऊरू तदस्य यद्वैश्यः पद्भ्यार्ठ० शूद्रो अजायत॥ ११॥ चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ १२॥ नाभ्या आसीदन्तरिक्षर्ठ० शीर्ष्णो द्यौः समवर्तत। पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२ अकल्पयन्॥ १३॥

यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥ १४॥ सप्तास्यासन्परिधयस्त्रिःसप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन्पुरुषं पशुम्॥ १५॥ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥

वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम्। देवस्त्वा सविता पुनातु वसोः पवित्रेण शत धारेण सुप्वा कामधुक्षः स्वाहा॥

कर्ता हवन के उपरान्त जो घृतादि शेष हो उसे प्रोक्षणीपात्र में इस वाक्य का उच्चारण करके छोड़ दें—'ॐ इदमग्नये वैश्वानराय न मम।' आचार्य निम्न श्लोकों का उच्चारण करके कर्ता से अग्निदेवता की प्रार्थना करवाये—

श्रद्धां मेधां यशः प्रज्ञां विद्यां पुष्टिं श्रियं बलम्।
तेज आयुष्यमारोग्यं देहि मे हव्यवाहन!॥ १॥
भो भो अग्ने! महाशक्ते! सर्वकर्मप्रसाधन!।
कर्मान्तरेऽपि सम्प्राप्ते सान्निध्यं कुरु सर्वदा॥ २॥

## अथाग्नेःप्रदक्षिणम्

आचार्य निम्न मन्त्र का उच्चारण करते हुए कर्ता से अग्निदेवता की प्रदक्षिणा करावें—

ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम्॥

इत्यनेन मन्त्रेणाग्निं परिक्रम्य अग्नेः पश्चिमदिशि प्राङ्मुख उपविशेत्।

## हवनीयकुण्डभस्मधारणम्

आचार्य हवनकुण्ड से स्रुव के द्वारा भस्म निकाले अपने शरीर में लगाने के उपरान्त निम्न नाममन्त्रों का उच्चारण करते हुए अनामिका अंगुली से कर्ता के शरीर के अंगों में इस प्रकार भस्म लगावे—ॐ त्र्यायुषञ्जमदग्नेः-ललाटे। ॐ कश्यपस्य त्र्यायुषम्-ग्रीवायाम्। ॐ यद्देवेषु त्र्यायुषम्-दक्षिण बाहुमूले।

**ॐ तन्नो अस्तु त्र्यायुषम्-हृदि।** तदुपरान्त प्रोक्षणीपात्र में स्थित घृत को कर्ता सूँघे और दो बार आचमन करके प्रणीतापात्र में रक्खी हुई पवित्री से प्रणीता जल को अपने मस्तक पर छिड़के और उन दोनो कुशाओं का अग्नि में परित्याग कर दे।

## ब्रह्मणे पूर्णपात्रदानम्

कर्ता इस संकल्प का उच्चारण करके ब्रह्मा को दक्षिणा सहित पूर्णपात्र प्रदान करे—**देशकालौ सङ्कीर्त्य, गोत्रः शर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्ण-फलप्राप्तये च इदं पूर्णपात्रं सदक्षिणं ब्रह्मणे तुभ्यमहं सम्प्रददे।** कर्ता संकल्प करके ब्रह्मा को पूर्णपात्र प्रदान करे और ब्रह्मा इस वाक्य का उच्चारण करे—**ॐ द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु।** अग्नि के पीछे जलयुक्त पात्र को कर्ता उलट दे। पुनः आचार्य इस मन्त्र का उच्चारण करे—**ॐ आपः शिवाः शिवंतमाः शान्ताः शान्ततमास्ते कृण्वन्तु भेषजम्।** इसके पश्चात् कर्ता प्रणीतापात्र के जल से मार्जन करे, पुनः अग्नि में पवित्री को छोड़ देवे।

## अवभृथस्नानम्

कर्ता प्रधानवेदी के ऊपर स्थापित प्रधानकलश के पास स्रुव—स्रुवादि यज्ञपात्र व पूजन सामग्री को लेकर वेदमन्त्रों व भगवान् का कीर्तन व वाद्यघोष के साथ आचार्य और ब्राह्मणों तथा बन्धु—बान्धव व नगरवासियों के साथ नदी या तालाब के किनारे जायें। आधे मार्ग पर क्षेत्रपाल का पूजन कर क्षेत्रपाल को बलि प्रदान करें और नदी व जलाशय के किनारे जाने पर आचार्य एवं ऋत्विक स्वस्तिवाचन का पाठ करना प्रारम्भ करें, तदुपरान्त आचार्य इस संकल्प को कर्ता से करावें—**देशकालौ सङ्कीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम् ) मम सर्वेषां परिवाराणां तथाऽन्येषां समुपस्थितानां जनानाञ्च सर्वविधकल्याणपूर्वकं धर्मार्थ - काम - मोक्ष - चतुर्विध-पुरुषार्थसिद्धिद्वारा श्रीपरमेश्वरप्रीतिपूर्वकं च कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः सांगतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च पुण्यकालेऽस्मिन् अस्यां नद्यां जलाशय वा मांगलिकावभृथस्नानं समस्तसमुपस्थितजनैः सहाहं करिष्ये।**

अनन्तरं नद्यां जलाशये वा जलमातृणामावाहनं पूजनं च कुर्यात्। तद्यथा– ॐ भूर्भुवः स्वः मत्स्यै नमः, मत्सीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः कूर्म्यै नमः, कूर्मीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः वाराह्यै नमः, वाराहीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः दर्दुर्यै नमः, दर्दुरीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः मकर्यै नमः, मकरीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः जलूक्यै नमः, जलूकीमावाहयामि स्थापयामि। ॐ भूर्भुवः स्वः तन्तुक्यै नमः, तन्तुकीमावाहयामि स्थापयामि। ततो वरुणदेवतामावाहयेत्– आगच्छ जलदेवेश जलनाथ पयस्पते। तव पूजां करिष्यामि कुम्भेऽस्मिन् सन्निधिं कुरु॥ इत्यावाह्य सम्पूज्यं च–श्वेताभ्र शिखिराकार सर्वभूतहिते रतः। गृहाणार्घ्यमिमं देव जलनाथ नमोऽस्तु ते॥ इति विशेषार्घ्यं दद्यात्। ततः–

ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामस्युराचके॥ १॥ ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशर्ठ० समान आयुः प्रमोषीः॥ २॥ ॐ त्वन्नो अग्ने वरुणस्य विद्वान् देवस्य हेड़ो अवयासिसीष्ठाः। यजिष्ठो बह्नितमर्ठ० शोशुचानो विश्वा द्वेषार्ठ०सि प्रमुमुग्ध्यस्मत्॥ ३॥ ॐ सत्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या ऽउषसो व्युष्टौ। अव यक्ष्वनो वरुणर्ठ० रराणो वीहि मृडीकर्ठ० सुहवो नऽएधि॥ ४॥ ॐ मापो मौषधीर्हिर्ठ० सीर्द्धाम्नो धाम्ना राजँस्ततो वरुण नो मुञ्च। यदाहुरघ्न्या ऽइति वरुणओत शपामहे ततो वरुण नो मुञ्च॥ ५॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमर्ठ० श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥ ६॥ ॐ मुञ्चन्तु मा शपथ्यादथो वरुण्यादूत। अथो यमस्य षड्वीशात् सर्वस्माद्देव-किल्विषात्॥ ७॥ ॐ अवभृथ निचुं पुण निचेरुरसि निचुं पुणः। अव देवैर्द्देवकृतमेनो यासिषमवमर्त्त्यैमर्त्त्यकृतं पुरुराब्णो देवरिष-स्पाहि॥ ८॥

इति मन्त्रैः सम्प्रार्थ्य स्त्रुवरेखया तीर्थप्रकल्पनं कुर्यात्। ब्रह्माण्डोदर-तीर्थानि चाकृष्याङ्कुशमुद्रया। तेन सत्येन मे देव तीर्थं देहि दिवाकर॥ इति रज्वादिना परितश्चतुरस्त्रं स्नानार्थं व्यवस्थां प्रकल्पयेत्। ततः–ॐ पञ्च नद्यः सरस्वतीमपियन्ति सस्त्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्॥ इति मन्त्रेण गङ्गां नदीं जलाशयं वा सम्पूज्य ततो लाजादिना जीवमातृणां बलिं दद्यात् तद्यथा–ॐ भूर्भुवः स्वः कुमार्यै नमः। ॐ भूर्भुवः स्वः धनदायै नमः। ॐ भूर्भुवः स्वः नन्दायै नमः। ॐ भूर्भुवः स्वः विमलायै नमः। ॐ भूर्भुवः स्वः मङ्गलायै नमः। ॐ भूर्भुवः स्वः अचलायै नमः। ॐ भूर्भुवः स्वः पद्मायै नमः। ततो होमावसरे हवनकुण्डाद् बहिः पतितं हवनीयद्रव्यं नद्यां जलाशये वा तूष्णीं प्रक्षिपेत्। ततो जले– 'वडवाग्निरूपायाग्नये नमः' इतिमन्त्रेण षोडशोपचारैः पञ्चोपचारैर्वा सम्पूज्य द्वादश आज्याहुतीन् जुहुयात्। तद्यथा–१. ॐ अद्भ्यः स्वाहा, इदमद्भ्यो न मम॥ २. ॐ वार्भ्यः स्वाहा, इदं वार्भ्यो न मम॥ ३. ॐ उदकाय स्वाहा, इदमुदाय न मम॥ ४. ॐ तिष्ठन्तीभ्यः स्वाहा, इदं तिष्ठन्तीभ्यो न मम॥ ५. ॐ स्त्रवन्तीभ्यः स्वाहा, इदं स्त्रवन्तीभ्यो न मम॥ ६. ॐ स्यन्दमानाभ्यः स्वाहा, इदं स्यन्दमानाभ्यो न मम॥ ७. ॐ कूप्याभ्यः स्वाहा, इदं कूप्याभ्यो न मम॥ ८. ॐ सूद्याभ्यः स्वाहा, इदं सूद्याभ्यो न मम॥ ९. ॐ धार्याभ्यः स्वाहा, इदं धार्याभ्यो न मम॥ १०. ॐ अर्णवाय स्वाहा, इदमर्णवाय न मम॥ ११. ॐ समुद्राय स्वाहा, इदं समुद्राय न मम॥ १२. ॐ सरिराय स्वाहा, इदं सरिराय न मम॥ ततो यजमानः सम्पूजितेन प्रधानकलशोदकेन–१. ॐ इमं मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके॥ २. ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोद्ध्युरुशर्ठ० स मा नऽआयुः प्रमोषीः स्वाहा॥ ३. ॐ त्वन्नो ऽअग्ने वरुणस्य विद्वान्देवस्य हेडो अव यासिसीष्ठाः॥ यजिष्ठो वह्नितमः शोशुचानो विश्श्वा द्वेषार्ठ०सि प्प्र मुमुग्ध्यस्मत्॥ ४. ॐ स त्वं नो अग्ने वमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो

**वरुणर्ठ० रराणो वीहि मृडीकः सुहवो न ऽएधि॥ ५. ॐ उदुत्तमं वरुण पाशमस्म्मदवाधमं विमध्यमर्ठ० श्रथाय। अथा वयमादित्य व्रते तवानागसो अदितये स्याम॥** तदुपरान्त यजमान वारुण मन्त्रों से स्नान करे और प्रधान कलश के अन्दर से कुशा एवं दूर्वा के द्वारा जल निकालकर अन्य लोगों के ऊपर छोड़े, इसके उपरान्त कर्ता यज्ञकुण्ड से भस्म शुचि के द्वारा निकालकर अपने शरीर पर उसका लेपन करें और नदी अथवा जलाशय में जाकर स्नान कर, नूतन वस्त्र धारण कर अपने मस्तक पर तिलक लगावे।

**ॐ हर्ठ० सः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥** इति मन्त्रेण सूर्योपस्थानं कृत्वा तीर्थदेवतां सम्पूज्य प्रार्थयेत्– **ॐ हिरण्यशृङ्गोऽयो अस्य पादा मनोजवा अवर इन्द्र आसीत्। देवा इदस्य हविरद्यमायन्यो अर्वन्तं प्रथमो अध्यतिष्ठत्॥ १॥ ईर्मान्तासः सिलिक-मध्यमासः सर्ठ०शूरणासो दिव्यासो अत्याः। हर्ठ०सा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः॥ २॥ तव शरीरं पतयिष्ण्वर्वन् तव चित्तं वात इव ध्रजीमान्। तव शृङ्गाणि विष्ठिता पुरुत्रारण्येषु जर्भुराणा चरन्ति॥ ३॥**

इसके पश्चात् ही कर्ता आचार्य और ब्राह्मणों को अपनी सामर्थ्य के अनुसार दक्षिणा प्रदान करें। तदुपरान्त प्रधान कलश और पूजा सामग्री को लेकर भगवान् का कीर्तन व भजन करें। आचार्य और ब्राह्मणों के साथ कर्ता अपनी पत्नी के साथ अनुष्ठानस्थल पर आकर हाथ व पैर धोकर मण्डप की प्रदक्षिणा करके मण्डप के पूर्वद्वार से अन्दर प्रवेश करें। उपरान्त प्रधानकलश को प्रधानवेदी पर कर्ता स्थापित करे। इसके उपरान्त आचार्य होमात्मक–श्रीसन्तानगोपालानुष्ठानकर्म के अवशिष्ट कर्मों को पुनः प्रारम्भ करवायें।

---

## श्रेयोदानम्

आचार्य और कर्ता दोनों ही श्रेयोदान निम्न क्रम से करें—

कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफल-प्राप्त्यर्थं च कर्त्रे श्रेयोदानं करिष्ये। इति सङ्कल्प्य 'शिवा आपः सन्तु' इति कर्तृदक्षिणहस्ते जलं दद्यात्। सौमनस्यमस्तु इति पुष्पं दद्यात्। अक्षतं चारिष्टं चास्तु इति अक्षतान् दद्यात्। तत आचार्यः हस्ते जलाक्षतपूगीफलमादाय भवन्नियोगेन मया अस्मिन् होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणि यत्कृतम् आचार्यत्वं तथा च एभिर्ब्राह्मगाणपत्यसदस्योपद्रष्टृजापकादिभिर्ब्राह्मणैः सह यत्कृतं जपहवनादिकं तेनोत्पन्नं यच्छ्रेयस्तत् साक्षतेन सजलेन पूगीफलेन तुभ्यमहं सम्प्रददे, तेन श्रेयसा त्वं श्रेयस्वान् भव। आचार्य यह कहकर यजमान को फल आदि दे और कर्ता 'भवामि' इस वाक्य का उच्चारण कर उसे ग्रहण करे।

## आचार्यादिभ्यो दक्षिणादानम्

कर्ता सन्तानगोपालअनुष्ठान की पूर्णता के लिए आचार्य और वरण किये हुए ब्राह्मणों को दक्षिणा प्रदान करने के लिए अपने दायें हाथ में जल, अक्षत लेकर यह संकल्प करें—देशकालौ संकीर्त्य, गोत्रः शर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गता-सिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च आचार्यादिभ्यो ब्राह्मणेभ्यो विभज्य मनसोद्दिष्टां दक्षिणां दातुमहमुत्सृज्ये। संकल्प के पश्चात् मण्डप में ही कर्ता आचार्य और ब्राह्मणों को दक्षिणा देवे।

## गोदानादिसंकल्पः

कर्ता इस संकल्प को करके आचार्य को गोदान देवे—देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( अमुकवर्माऽहम्, अमुकगुप्तोऽहम्, अमुक-दासोऽहम् ) कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गता-सिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थमिदं गोनिष्क्रयभूतं द्रव्यममुकगोत्रायामुक-शर्मणे ब्राह्मणाय आचार्याय तुभ्यमहं सम्प्रददे। एवमेव ब्रह्म-गाणपत्य-सदस्योपद्रष्टृ-ऋत्विजेभ्यः वृषरथाश्व-गन्धी-सुवर्णादिनिष्क्रयभूतं द्रव्यम् पृथक्-पृथक् दद्यात्।

## भूयसीदक्षिणासंकल्पः

कर्ता अपने दाये हाथ में जल, अक्षत लेकर भूयसीदक्षिणा का संकल्प निम्न प्रकार से करे–देशकालौ संकीर्त्य, कृतेऽस्मिन् होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणि न्यूनांतिरिक्तदोषपरिहारार्थं नानानामगोत्रेभ्यो नानाशर्मभ्यो नटनर्तकगायकेभ्यो दीनानाथेभ्यश्च यथाशक्ति भूयसीं दक्षिणां विभज्य दातुमहमुत्सृज्ये।

## ब्राह्मणभोजनसंकल्पः

कर्ता दायें हाथ में जल, अक्षत लेकर ब्राह्मणभोजन के निमित्त निम्न संकल्प करे–देशकालौ संकीर्त्य, कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं च यथासङ्ख्याकान् ब्राह्मणान् भोजयिष्ये। ( भोजयिष्यामि )

## उत्तरपूजनम्

कर्ता उत्तरपूजन के लिए निम्न संकल्प को करे–

**कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं चावाहितदेवानामुत्तरपूजनं करिष्ये।**

कर्ता से संकल्प करवाके ही आचार्य गणपत्यादिआवाहित देवताओं की पूजा उससे करावें।

## प्रधानपीठादिदानसंकल्पः

कर्ता मण्डप एवं प्रधानपीठ का दान आचार्य को करने के लिए निम्न संकल्प करे–देशकालौ संकीर्त्य, कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थमिमानि सोपस्करसहितानि प्रधानपीठादीनि आचार्याय तुभ्यमहं सम्प्रददे। इति सङ्कल्प्य प्रधानपीठादिकमाचार्य दद्यात्।

---

## अथाभिषेकः

कर्ता और उसकी पत्नी के अभिषेक के लिये भद्रासन बिछावें। उस आसन पर कर्ता पूर्व की ओर मुख करके बैठे और उसकी 'पत्नी उसके बायें भाग में बैठे। उस समय आचार्य सहित सभी ब्राह्मण पूर्वस्थापित सभी कलशों के जल को शुद्ध ताँबे के चौड़े मुख के पात्र में थोड़ा–थोड़ा लेकर 'दूर्वा और पंचपल्लवादि' से निम्न वैदिक मंत्रों का उच्चारण करके अभिषेक करें–

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ॥ १॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्याम्। सरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि ॥ २॥ देवस्य त्वा सवितुः प्रसवेऽश्विनो-र्बाहुभ्यां पूष्णो हस्ताभ्याम्। अश्विनौर्भैषज्येन तेजसे ब्रह्मवर्चसाया-भिषिञ्चामि सरस्वत्यै भैषज्येन वीयर्यायान्नाद्यायाभिषिञ्चा-मीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिञ्चामि॥ ३॥ शिरो मे श्रीर्यशो मुखं त्विषिः केशाश्च श्मश्रूणि। राजा मे प्राणो अमृतर्ठ० सम्राट् चक्षुर्विराट् श्रोत्रम्॥ ४॥ जिह्वा मे भद्रं वाङ्महो मनो मन्युः स्वराड् भामः। मोदाः प्रमोदा अङ्गुलीरङ्गानि मित्रं मे सहः॥ ५॥ बाहू मे बलमिन्द्रियर्ठ० हस्तौ मे कर्म वीर्यम्। आत्मा क्षत्रमुरो मम॥ ६॥ पृष्ठीर्मे राष्ट्रमुदरमर्ठ०सौ ग्रीवाश्च श्रोणी। ऊरू अरत्नी जानुनी विशो मेऽङ्गानि सर्वतः॥ ७॥ नाभिर्मे चित्तं विज्ञानं पायुर्मेऽपचितिर्भसत्। आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः। जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः॥ ८॥ प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रति तिष्ठामि गोषु। प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् प्रति प्राणेषु प्रतितिष्ठामि पुष्टे प्रति द्यावापृथिव्योः प्रतितिष्ठामि यज्ञे॥ ९॥ त्रया देवा एकादश

त्रयस्त्रिर्ठ० शाः सुराधसः। बृहस्पतिपुरोहिता देवस्य सवितुः सवे। देवा देवैरवन्तु मा॥१०॥ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूर्ठ०षि सामभिः सामान्यृग्भि-र्ऋचः पुरोनुवाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या वषट्-कारैर्वषट्कारा आहुतिभिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा॥११॥ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः। सचेतसो विश्वे देवा यज्ञं प्राप्तु नः शुभे॥१२॥ त्वं यविष्ठ दाशुष नृँः पाहि शृणुधी गिरः। रक्षा तोकमुत त्मना॥१३॥ आपो हि ष्ठा मयोभुवस्तान ऊर्जे दधातन। महे रणाय चक्षसे॥१४॥ यो वः शिवतमो रसस्तस्य भाजयतेह नः। उशतीरिव मातरः॥१५॥ तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥१६॥ द्यौः शान्तिरन्तरिक्षर्ठ० शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वर्ठ० शान्तिः शान्तिरेवशान्तिः सा मा शान्तिरेधि॥१७॥ यतोयतः समीहसे ततो नो अभयं कुरु। शन्नः कुरु प्रजाभ्योऽभयं नः पशुभ्यः॥१८॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः। पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा॥१९॥ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्। भवा वाजस्य सङ्गथे॥२०॥ पञ्चनद्यः सरस्वतीमपियन्ति सस्त्रोतसः। सरस्वती तु पञ्चधा सो देशेऽ-भवत्सरित्॥ २१॥ विश्वानि देव सवितर्दुरितानि परासुव। यद् भद्रं तन्न आ सुव॥ २२॥

---

## पौराणिकमन्त्रैरभिषेकः

सुरास्त्वामभिषिञ्चन्तु ब्रह्म-विष्णु-महेश्वराः।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः॥ १॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते।
आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा॥ २॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा॥ ३॥
कीर्तिर्लक्ष्मीधृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः॥ ४॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः।
आदित्यश्चन्द्रमा भौमो बुध-जीव-सितार्कजा॥ ५॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः।
देव-दानव-गन्धर्वा यक्ष-राक्षस-पन्नगाः॥ ६॥
ऋषयो मनवो गावो देवमातर एव च।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः॥ ७॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च।
औषधानि च रत्नानि कालस्याऽवयवाश्च ये॥ ८॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः।
एते त्वामभिषिञ्चन्तु धर्मकामाऽर्थसिद्धये॥ ९॥

---

**भावार्थ**—ब्रह्मा, विष्णु, महेश्वर और देवता जगन्नाथ, वासुदेव तथा विभु, संकर्षण तुम्हारा अभिषेक करें। प्रद्युम्न, अनिरुद्ध, अखण्ड अग्नि, भगवान् यम और निर्ऋति तुम्हारी विजय करें॥ १–२॥ वरुण, पवन, धनाध्यक्ष तथा शिव एवं ब्राह्मणों के साथ सभी दिग्पाल तुम्हारी सदा रक्षा करें। आई हुई कीर्ति, लक्ष्मी, घृति, मेघा, पुष्टि, श्रद्धा, क्रिया, मति, बुद्धि, लज्जा, वपु, शान्ति, कान्ति और तुष्टि ये माताएँ तथा देवपत्नियाँ तुम्हारा अभिषेक करें। आदित्य, चन्द्रमा, भौम, बुध, बृहस्पति, शुक्र, शनि, राहु और केतु तृप्त हुए सभी ग्रह तुम्हारा अभिषेक करें। देव, दानव, गन्धर्व, यक्ष, राक्षस, सर्प॥ ३–६॥ ऋषि, मानव, गायें, देवमाताएँ, देवपत्नियाँ, वृक्ष, नाग, दैत्य, अप्सरागण। सभी अस्त्र, शस्त्र, राजा, वाहन, औषध, रत्न और जो काल के अवयव हैं। तथा नदियाँ, समुद, पर्वत, तीर्थ, बादल और नद ये धर्म, काम एवं अर्थ की सिद्धि के लिए तुम्हारा अभिषेक करें॥ ७–९॥

## घृतच्छायापात्रदानम्

**संकल्पः—देशकालौ संकीर्त्य, गोत्रः शर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) कृतस्य होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्मणः साङ्गता-सिद्ध्यर्थं तत्सम्पूर्णफलप्राप्त्यर्थं सर्वारिष्टविनाशार्थं चाज्यावेक्षणं करिष्ये।**

कर्ता एक कांसे के चौड़े मुख के पात्र में घृत भरकर उसमें दक्षिणा सहित सुवर्ण छोड़कर अपने मुख की छाया को देखकर ब्राह्मण को प्रदान करें। उक्तं च— **कांस्यपात्रे स्थिताज्यं च आत्मरूपं निरीक्ष्य तु। स-सुवर्णं तु यो दद्यात् सर्वविघ्नोपशान्तये॥** आचार्य निम्न मंत्र का उच्चारण करे और कर्ता उसमें अपना मुख देखे—**ॐ रूपेण वो रूपमभ्यागा तुथो वो विश्ववेदा विभजतु। ऋतस्य पथा प्रेत चन्द्रदक्षिणा विस्वः पश्य व्यन्तरिक्षं यत्तस्व सदस्यैः॥** छायापात्र में मुख देखने के पश्चात् कर्ता निम्न संकल्प का उच्चारण कर उस चौड़े मुख के पात्र को ब्राह्मण को दे—**देशकालौ संकीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) इदमवलोकितमाज्यं कांस्यपात्रस्थितं स-सुवर्णं श्रीविष्णुदेवतं विष्णुदेवताप्रीतये सर्वारिष्टविनाशार्थं चामुकगोत्रायामुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।** ब्राह्मण आज्यपात्र को ग्रहण करके 'स्वस्ति' यह कहकर कर्ता को आशीर्वाद प्रदान करे।

## क्षमापनम्

**आवाहनं न जानामि न जानामि विसर्जनम्।**
**पूजां चैव न जानामि क्षमस्व परमेश्वर॥**
**मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर।**
**यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥**
**अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।**
**दासोऽयमिति मां मत्त्वा क्षमस्व परमेश्वर॥**
**ज्ञानतोऽज्ञानतो वापि यन्न्यूनमधिकं कृतम्।**
**तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर॥**
**कर्मणा मनसा वाचा श्रीसन्तानगोपालर्मया कृता।**
**तेन तुष्टिं समासाद्य प्रसीद परमेश्वरः॥**

## विसर्जनम्

कर्ता इस संकल्प को करके विसर्जन कर्म करे—देशकालौ सङ्कीर्त्य, अमुकगोत्रः अमुकशर्माऽहम् ( वर्माऽहम्, गुप्तोऽहम्, दासोऽहम् ) होमात्मक-श्रीसन्तानगोपालानुष्ठानकर्माङ्गत्वेन देवविसर्जनं कर्म करिष्ये। इति सङ्कल्पय स्थापितदेवानग्निं च सानुनयं पुष्पाक्षतैर्विश्रीजेत् ।

विसर्जनमन्त्राः—ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप प्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा॥ ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहा। एष ते यज्ञो यज्ञपते सहसूक्तवाकः सर्ववीरस्तं जुषस्व स्वाहा॥ ॐ समुद्रं गच्छ स्वाहान्तरिक्षं गच्छ स्वाहा देवꣳसवितारं गच्छ स्वाहा मित्रावरुणौ गच्छ स्वाहा होरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्या वा पृथिवी गच्छ स्वाहा यज्ञं गच्छ स्वाहा सोमं गच्छ स्वाहा दिव्यं नभो गच्छ स्वाहाग्निं वैश्वानरं गच्छ स्वाहा। मनो मे हार्दि यच्छ दिवं ते धूमौ गच्छ तु स्वर्ज्योतिः पृथिवीं भस्मनापृण स्वाहा॥

यान्तु देवगणाः सर्वे पूजामादाय मामिकाम्।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च॥ १॥
गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर।
यत्र ब्रह्मादयो देवा तत्र गच्छ हुताशन॥ २॥
प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः॥ ३॥
यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्॥ ४॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स्मै यज्ञात्मने नमः॥ ५॥

कर्ता उच्चारण करे—अनेन यथाशक्तिकृतेन होमात्मक-श्रीसन्तान-गोपालानुष्ठानकर्मणा श्रीपापापहा महाविष्णुः प्रीयताम्।

कर्ता तीन बार ॐ विष्णवे नमः, ॐ विष्णवे नमः, ॐ विष्णवे नमः। कहे।

## कर्तृरक्षाबन्धनमन्त्रः

ॐ यदाबध्नन्दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्य-मानाः। तन्म आबध्नामि शतशारदायायुष्मान्जरदष्टिर्यथासम्॥

## कर्तृपत्नीरक्षाबन्धनमन्त्रः

ॐ तं पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुत वा हिरण्यैः। नाकं गृभ्णानाः सुकृतस्य लोके तृतीये पृष्ठे अधि रोचने दिवः॥

कर्त्रेआशीर्वादमन्त्राः—ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ १॥ ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः। घृतेन त्वं तन्वं वर्धयस्व सत्याः सन्तु यजमानस्य कामाः॥ २॥ ॐ दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम्। अथो त्वं दीर्घायुर्भूत्वा शतवल्शा विरोहतात्॥ ३॥

श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः॥ १॥
अपुत्राः पुत्रिणः सन्तु पुत्रिणः सन्तु पौत्रिणः।
निर्धनाः सधनाः सन्तु जीवन्तु शरदां शतम्॥ २॥
मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः।
शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव॥ ३॥

कर्तृपत्न्या आशीर्वादमन्त्राः—ॐ यावती द्यावापृथिवी यावच्च सप्त सिन्धवो वितस्थिरे। तावन्तमिन्द्र ते ग्रहमूर्जा गृह्णाम्यक्षितं मयि गृह्णाम्यक्षितम्॥ १ ॥ ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम्। इष्णन्निषाणामुं म इषाण सर्वलोकं म इषाण॥ २॥

आचार्य और ब्राह्मणों को भोजन करवाने के पश्चात् कर्ता अपनी धर्मपत्नी पुत्र–पौत्रों व पारिवारिकजनों और इष्टमित्रों के साथ श्रीसन्तानगोपालदेवता के महाप्रसाद को प्रसन्नचित्त होकर ग्रहण करें।

॥ इति श्रीसन्तानगोपालानुष्ठानविधिः॥

॥ ॐ भगवते वासुदेवाय नमः ॥

## श्रीसन्तानगोपालस्तोत्रम्

श्रीशं कमलपत्राक्षं देवकीनन्दनं हरिम्।
सुतसम्प्राप्तये कृष्णं नमामि मधुसूदनम्॥ १॥
नमाम्यहं वासुदेवं सुतसम्प्राप्तये हरिम्।
यशोदाङ्कगतं बालं गोपालं नन्दनन्दनम्॥ २॥
अस्माकं पुत्रलाभाय गोविन्दं मुनिवन्दितम्।
नवाम्यहं वासुदेवं देवकीनन्दनं सदा॥ ३॥
गोपालं डिम्भकं वन्दे कमलापतिमच्युतम्।
पुत्रसम्प्राप्तये कृष्णं नमामि यदुपुङ्गवम्॥ ४॥
पुत्रकामेष्टिफलदं कञ्जाक्षं कमलापतिम्।
देवकीनन्दनं वन्दे सुतसम्प्राप्तये मम॥ ५॥
पद्मापते पद्मनेत्र पद्मनाभ जनार्दन।
देहि मे तनयं श्रीश वासुदेव जगत्पते॥ ६॥

---

**भावार्थ**—मैं पुत्रप्राप्ति के लिए कमलापति (लक्ष्मी के पति), कमलनयन, देवकीनन्दन एवं समस्त पापों का नाश करनेवाले, मधुसूदन, श्रीकृष्ण को नमस्कार करता हूँ॥ १॥ मैं पुत्रप्राप्ति के उद्देश्य से उन वासुदेव हरि को प्रणाम करता हूँ, जो (माता) यशोदा के गोद में बाल–गोपाल रूप से विराजमान होकर नन्द को आनन्द दे रहे हैं॥ २॥ अपने को पुत्रप्राप्ति के लिए मैं मुनियों के द्वारा वन्दित वसुदेव–देवकीनन्दन गोविन्द की सदैव वन्दना करता हूँ॥ ३॥ मैं पुत्रप्राप्ति की इच्छा से उन यदुकुल तिलक श्रीकृष्ण को प्रणाम करता हूँ, जो साक्षात् लक्ष्मीपति अच्युत (विष्णु) होकर भी गोपबालक रूप से गौओं की रक्षा में संलग्न हुए हैं॥ ४॥ मुझे पुत्र की प्राप्ति हो, इसके लिए मैं पुत्रेष्टियज्ञ के फल को देनेवाले कमलनयन लक्ष्मीपति देवकीनन्दन श्रीकृष्ण की वन्दना करता हूँ॥ ५॥ पद्मापते! कमलनयन, पद्मनाभ! जनार्दन! श्रीश! वासुदेव! जगत्पते! मुझे पुत्र प्रदत्त कीजिए॥ ६॥

यशोदाङ्कगतं बालं गोविन्दं मुनिवन्दितम्।
अस्माकं पुत्रलाभाय नमामि श्रीशमच्युतम्॥ ७॥
श्रीपते देवदेवेश दीनार्तिहरिणाच्युत।
गोविन्द मे सुतं देहि नमामि त्वां जनार्दन॥ ८॥
भक्तकामद गोविन्द भक्तं रक्ष शुभप्रद।
देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो!॥ ९॥
रुक्मिणीनाथ सर्वेश देहि मे तनयं सदा।
भक्तमन्दार पद्माक्ष त्वामहं शरणं गतः॥ १०॥
देवकीसुत गोविन्द! वासुदेव! जगत्पते!।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ११॥
वासुदेव जगद्वन्द्य श्रीपते पुरुषोत्तम।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ १२॥
कञ्जाक्ष कमलनाथ परकारुणिकोत्तम।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ १३॥

---

**भावार्थ**—यशोदा के गोद में बालरूप से विराजमान और अपनी महिमा से कभी च्युत न होनेवाले मुनियों के द्वारा वन्दित लक्ष्मी के पति गोविन्द को मैं प्रणाम करता हूँ। ऐसा करने से मुझे पुत्र की प्राप्ति हो॥ ७॥ श्रीपते! देवदेवेश्वर! दीन–दुखियों के कष्टों को दूर करनेवाले अच्युत! गोविन्द मुझे पुत्र प्रदत्त करे। जनार्दन मैं आपको प्रणाम करता हूँ॥ ८॥ भक्तों की मनोकामना पूर्ण करनेवाले गोविन्द! भक्त की रक्षा करें। शुभदायक! रुक्मिणीवल्लभ! प्रभो! श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिए॥ ९॥ रुक्मिणीनाथ! सर्वेश्वर! मुझे पुत्र सदा के लिये दीजिये। भक्तों की (मनोवांछित) इच्छा पूरी करने के लिये कल्पवृक्ष के समान कमलनयन श्रीकृष्ण! मैं आपकी शरण में आया हूँ॥ १०॥ देवकीपुत्र! गोविन्द! वासुदेव! जगन्नाथ! श्रीकृष्ण! मुझे पुत्र दीजिये। मैं आपकी शरण में आया हूँ॥ ११॥ विश्ववन्द्य वासुदेव! लक्ष्मीपते! पुरुषोत्तम! श्रीकृष्ण! मुझे पुत्र दीजिये। मैं आपकी शरण में आया हूँ॥ १२॥ कमलनयन! कमलाकान्त! दूसरों पर दया करनेवालों में सर्वोत्तम श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिये। मैं आपकी शरण में आया हूँ॥ १३॥

लक्ष्मीपते पद्मनाभ मुकुन्द मुनिवन्दित।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ १४॥
कार्यकारणरूपाय वासुदेवाय ते सदा।
नमामि पुत्रलाभार्थं सुखदाय बुधाय ते॥ १५॥
राजीवनेत्र श्रीराम रावणारे हरे कवे।
तुभ्यं नमामि देवेश तनयं देहि मे हरे॥ १६॥
अस्माकं पुत्रलाभाय भजामि त्वां जगत्पते।
देहि मे तनयं कृष्ण वासुदेव रमापते॥ १७॥
श्रीमानिनीमानचोर गोपीवस्त्रापहारक।
देहि मे तनयं कृष्ण वासुदेव जगत्पते॥ १८॥
अस्माकं पुत्रसम्प्राप्तिं कुरुष्व यदुनन्दन।
रमापते वासुदेव मुकुन्द मुनिवन्दित॥ १९॥
वासुदेव सुतं देहि तनयं देहि माधव।
पुत्रं मे देहि श्रीकृष्ण वत्सं देहि महाप्रभो॥ २०॥

---

**भावार्थ**—लक्ष्मीपते! पद्मनाभ! मुनियों से वन्दित मुकुन्द! श्रीकृष्ण! मुझे पुत्र दीजिये। मैं आपकी शरण में आया हूँ॥ १४॥ आपही कार्य—कारणरूप, सुखदायक और विद्वान् हैं। मैं पुत्र प्राप्ति के लिये आप वासुदेव (श्रीकृष्ण) को सदैव नमस्कार करता हूँ॥ १५॥ कमलनयन! रावण के शत्रु! हरे! विद्वन्! देवेश्वर! विष्णो! मैं आपको नमस्कार करता हूँ। आप मुझे पुत्र प्रदत्त कीजिये॥ १६॥ जगदीश्वर! मैं स्वयं के लिये पुत्र प्राप्ति के कारण से आपकी आराधना करता हूँ। रमावल्लभ! वासुदेव! श्रीकृष्ण! मुझे पुत्र दीजिये॥ १७॥ मानिनी श्रीराधा के मान का अपहरण करनेवाले और अपनी आराधना करनेवाली गोपांगनाओं के वस्त्रों को यमुना नदी के किनारे से हटानेवाले जगन्नाथ वासुदेव श्रीकृष्ण! मुझे पुत्र दीजिये॥ १८॥ यदुनन्दन! रमापते! वासुदेव! मुनियों से वन्दित मुकुन्द! हमें पुत्र की प्राप्ति कराइये॥ १९॥ वासुदेव! मुझे पुत्र दीजिये। माधव! मुझे सन्तान दीजिये। श्रीकृष्ण! मुझे पुत्र दीजिये। महाप्रभो! मुझे वत्स दीजिये॥ २०॥

डिम्भकं देहि श्रीकृष्ण आत्मजं देहि राघव।
भक्तमन्दार मे देहि तनयं नन्दनन्दन॥ २१॥
नन्दनं देहि मे कृष्ण वासुदेव जगत्पते।
कमलानाथ गोविन्द मुकुन्द मुनिवन्दित॥ २२॥
अन्यथा शरणं नास्ति त्वमेव शरणं मम।
सुतं देहि श्रियं देहि श्रियं पुत्रं प्रदेहि मे॥ २३॥
यशोदास्तन्यपानज्ञं पिबन्तं यदुनन्दनम्।
वन्देऽहं पुत्रलाभार्थं कपिलाक्षं हरिं सदा॥ २४॥
नन्दनन्दन देवेश नन्दनं देहि मे प्रभो।
रमापते वासुदेव श्रियं पुत्रं जगत्पते॥ २५॥
पुत्रं श्रियं श्रियं पुत्रं पुत्रं मे देहि माधव।
अस्माकं दीनवाक्यस्य अवधारय श्रीपते॥ २६॥

---

**भावार्थ**—श्रीकृष्ण! मुझे पुत्र दीजिये। रघुनन्दन! मुझे औरस पुत्र दीजिये। भक्तों की इच्छाओं को पूर्ण करने के लिये कल्पवृक्ष के स्वरूप नन्दनन्दन! मुझे तनय (पुत्र) दीजिये॥ २१॥ श्रीकृष्ण! वासुदेव! जगत्पते! कमलानाथ! गोविन्द! मुनियों से वन्दित मुकुन्द! मुझे आनन्द देनेवाला पुत्र प्रदत्त कीजिए॥ २२॥ हे प्रभो! यदि आप ऐसा नहीं करेंगे, तो दूसरा कोई भी मुझे अपनी शरण में लेनेवाला नहीं है। अतः आपही मेरे शरणदाता हैं। मुझे पुत्र प्रदान करें। धन—सम्पत्ति प्रदत्त करें। सम्पत्ति और पुत्र दोनों ही मुझे प्रदान करें॥ २३॥ (माता) यशोदा के स्तनों के दुग्धपान के रस को जाननेवाले तथा उनका स्तनपान करनेवाले, भूरे नेत्रों से सुशोभित यदुनन्दन श्रीकृष्ण की मैं सदैव वन्दना करता हूँ, इससे मुझे पुत्र की प्राप्ति हो॥ २४॥ देवेश्वर! नन्दनन्दन! प्रभो! मुझे आनन्द देनेवाला पुत्र देवें। रमापते! वासुदेव! जगन्नाथ! मुझे धन और पुत्र (दोनों ही) दीजिये॥ २५॥ माधव! पुत्र व धन प्रदत्त करें, धन एवं पुत्र (दीजिये), मुझे पुत्र प्रदान कीजिये। श्रीपते! हमारे (मेरे) दीनतापूर्ण वचन पर ध्यान देवें॥ २६॥

गोपालडिम्भ गोविन्द वासुदेव रमापते।
अस्माकं डिम्भकं देहि श्रियं देहि जगत्पते॥ २७॥
मद्वाञ्छितफलं देहि देवकीनन्दनाच्युत।
मम पुत्रार्थितं धन्यं कुरुष्व यदुनन्दन॥ २८॥
याचेऽहं त्वां श्रियं पुत्रं देहि मे पुत्रसम्पदम्।
भक्तचिन्तामणे राम कल्पवृक्ष महाप्रभो॥ २९॥
आत्मजं नन्दनं पुत्रं कुमारं डिम्भकं सुतम्।
अर्भकं तनयं देहि सदा मे रघुनन्दन॥ ३०॥
वन्दे संतानगोपालं माधवं भक्तकामदम्।
अस्माकं पुत्रसंप्राप्त्यै सदा गोविन्दमच्युतम्॥ ३१॥
ॐकारयुक्तं गोपालं श्रीयुक्तं यदुनन्दनम्।
क्लींयुक्तं देवकीपुत्रं नमामि यदुनायकम्॥ ३२॥
वासुदेव मुकुन्देश गोविन्द माधवाच्युत।
देहि मे तनयं कृष्ण रमानाथ महाप्रभो॥ ३३॥

---

**भावार्थ**—गोपकुमार गोविन्द! रमावल्लभ वासुदेव! जगन्नाथ! मुझे पुत्र दीजिये, सम्पत्ति दीजिये॥ २७॥ देवकीनन्दन! अच्युत! मुझे मनोवांछित पुत्र प्रदान करें। यदुनन्दन! मेरी (इस) पुत्रविषयक प्रार्थना को सफल व धन्य कीजिये॥ २८॥ (अपने) भक्तों के लिए चिन्तामणिस्वरूप राम! भक्तवांछाकल्पतरो! महाप्रभो! मैं आपसे धन व पुत्र के लिये प्रार्थना करता हूँ। मुझे पुत्र और धन—सम्पत्ति प्रदत्त करें॥ २९॥ रघुनन्दन! आप सदैव मुझे आनन्द देनेवाले आत्मज पुत्र, कुमार, बालक, सुत, बच्चा एवं बेटा (प्रदान) कीजिये॥ ३०॥ मैं अपने लिये पुत्र की प्राप्ति के उद्देश्य से सन्तानप्रद गोपाल, माधव, भक्तों की मनोकामना पूर्ण करनेवाले अच्युत गोविन्द की वन्दना करता हूँ॥ ३१॥ ॐकारयुक्त गोपाल, श्रीयुक्त यदुनन्दन एवं क्लीं युक्त देवकीपुत्र यदुनाथ (श्रीकृष्ण) को प्रणाम करता हूँ॥ ३२॥ वासुदेव! मुकुन्द! ईश्वर! गोविन्द! माधव! अच्युत! श्रीकृष्ण! रमानाथ! महाप्रभो! मुझे पुत्र प्रदान करें॥ ३३॥

राजीवनेत्र गोविन्द कपिलाक्ष हरे प्रभो।
समस्तकाम्यवरद देहि मे तनयं सदा॥ ३४॥
अब्जपद्मनिभं पद्मवृन्दरूप जगत्पते।
देहि मे वरसत्पुत्रं रमानायक माधव॥ ३५॥
नन्दपाल धरापाल गोविन्द यदुनन्दन।
देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो॥ ३६॥
दासमन्दार गोविन्द मुकुन्द माधवाच्युत।
गोपाल पुण्डरीकाक्ष देहि मे तनयं श्रियम्॥ ३७॥
यदुनायक पद्मेश नन्दगोपवधूसुत।
देहि मे तनयं कृष्ण श्रीधर प्राणनायक॥ ३८॥
अस्माकं वाञ्छितं देहि देहि पुत्रं रमापते।
भगवन् कृष्ण सर्वेश वासुदेव जगत्पते॥ ३९॥
रमाहृदयसम्भार सत्यभामामनःप्रिय।
देहि मे तनयं कृष्ण रुक्मिणीवल्लभ प्रभो॥ ४०॥

---

**भावार्थ**—कमल के तुल्य नेत्रवाले! गोविन्द! कपिलाक्ष! हरे! प्रभो! सभी कामनाओं से युक्त मनोरथों की सिद्धि के लिये वर देनेवाले श्रीकृष्ण! मुझे सदा के लिए पुत्र देवें॥ ३४॥ नील कमल के समूह के तुल्य श्यामसुन्दर रूपवाले जगन्नाथ! रमानायक! माधव! मुझे जल में रहनेवाले कमल के सदृश मन को हरण करनेवाला एवं श्रेष्ठ सत्पुत्र प्रदान कीजिए॥ ३५॥ अजगर और वरुण दूतों से नन्दजी की रक्षा करनेवाले! पृथ्वीपालक! यदुनन्दन! गोविन्द! प्रभो! रुक्मिणीवल्लभ! श्रीकृष्ण! मुझे पुत्र प्रदान कीजिए॥ ३६॥ अपने सेवकों की मनोवांछित इच्छा पूर्ण करने के लिए कल्पवृक्षस्वरूप! गोविन्द! मुकुन्द! माधव! अच्युत! गोपाल! कमलनयन! मुझे सन्तान और सम्पत्ति दीजिए॥ ३७॥ यदुनायक! लक्ष्मीपते! यशोदानन्दन! श्रीधर! प्राणवल्लभ! श्रीकृष्ण! मुझे पुत्र प्रदान कीजिये॥ ३८॥ रमापते! भगवन्! सर्वेश्वर! वासुदेव! जगत्पते! श्रीकृष्ण! हमें मनोवांछित वस्तु दीजिये। पुत्र प्रदान कीजिए॥ ३९॥ लक्ष्मी को अपने वक्षःस्थल में धारण करनेवाले! सत्यभामा के हृदयवल्लभ! और रुक्मिणी के प्राणनाथ! हे प्रभो! मुझे पुत्र दीजिये॥ ४०॥

चन्द्रसूर्याक्ष गोविन्द पुण्डरीकाक्ष माधव।
अस्माकं भाग्यसत्पुत्रं देहि देव जगत्पते॥ ४१॥
कारुण्यरूप पद्माक्ष पद्मनाभसमर्चित।
देहि मे तनयं कृष्ण देवकीनन्दनन्दन॥ ४२॥
देवकीसुत श्रीनाथ वासुदेव जगत्पते।
समस्तकामफलद देहि मे तनयं सदा॥ ४३॥
भक्तमन्दार गम्भीर शङ्कराच्युत माधव।
देहि मे तनयं गोपबालवत्सल श्रीपते॥ ४४॥
श्रीपते वासुदेवेश देवकीप्रियनन्दन।
भक्तमन्दार मे देहि तनयं जगतां प्रभो॥ ४५॥
जगन्नाथ रमानाथ भूमिनाथ दयानिधे।
वासुदेवेश सर्वेश देहि मे तनयं प्रभो॥ ४६॥
श्रीनाथ कमलपत्राक्ष वासुदेव जगत्पते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ४७॥

---

**भावार्थ**—चन्द्रमा एवं सूर्यरूप नेत्र धारण करनेवाले गोविन्द! कमलनयन! माधव! देव! जगदीश्वर! हमें भाग्यवान् श्रेष्ठ (उत्तम) पुत्र प्रदत्त करें॥ ४१॥ करुणामय! कमलनयन! पद्मनाभ! श्रीविष्णु से सम्मानित देवकीनन्दनन्दन श्रीकृष्ण! मुझे पुत्र प्रदान कीजिये॥ ४२॥ देवकीपुत्र! श्रीनाथ! वासुदेव! जगत्पते! सभी मनोवांछित फलों को प्रदत्त करनेवाले श्रीकृष्ण! मुझे सदा के लिये पुत्र दीजिये॥ ४३॥ भक्तवांछाकल्पतरो! (समुद्र के तुल्य) गम्भीर स्वभाववाले कल्याणकारी अच्युत! माधव! ग्वाल—बालों पर स्नेह (प्रेम की वर्षा) करनेवाले श्रीपते! मुझे पुत्र दीजिये॥ ४४॥ श्रीकान्त! वसुदेवनन्दन! ईश्वर! (माता) देवकी के प्रियपुत्र! भक्तों के लिए कल्पवृक्षस्वरूप! जगत्प्रभो! मुझे पुत्र प्रदान कीजिये॥ ४५॥ जगन्नाथ! रमानाथ! पृथ्वीनाथ! दयानिधे! वासुदेव! ईश्वर! सर्वेश्वर! प्रभो! मुझे पुत्र प्रदान कीजिए॥ ४६॥ श्रीनाथ! कमलदललोचन! वासुदेव! संसार के स्वामी श्रीकृष्ण! मुझे पुत्र प्रदान कीजिए, (क्योंकि) मैं आपकी ही शरण में आया हूँ॥ ४७॥

दासमन्दार गोविन्द भक्तचिन्तामणे प्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ४८॥
गोविन्द पुण्डरीकाक्ष रमानाथ महाप्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ४९॥
श्रीनाथ कमलपत्राक्ष गोविन्द मधुसूदन।
मत्पुत्रफलसिद्ध्यर्थं भजामि त्वां जनार्दन॥ ५०॥
स्तन्यं पिबन्तं जननीमुखाम्बुजं बिलोक्य मन्दस्मितमुज्ज्वलाङ्गम्।
स्पृशन्तमन्यस्तनमङ्गुलीभिर्वन्दे यशोदाङ्कगतं मुकुन्दम्॥ ५१॥
याचेऽहं पुत्रसंतानं भवन्तं पद्मलोचन।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ५२॥
अस्माकं पुत्रसम्पत्तेश्चिन्तयामि जगत्पते।
शीघ्रं मे देहि दात्यं भवता मुनिवन्दित॥ ५३॥

---

**भावार्थ**—अपने दासों (सेवकों) के लिये कल्पवृक्षतुल्य! गोविन्द! भक्तों की मनोवांछित इच्छा पूर्ति के लिये चिन्तामणि—स्वरूप प्रभो! श्रीकृष्ण! मैं आपकी शरण में आया हूँ। मुझे पुत्र प्रदत्त कीजिये॥ ४८॥ गोविन्द! पुण्डरीकाक्ष! रमानाथ! महाप्रभो! श्रीकृष्ण! मुझे पुत्र दीजिये। (क्योंकि) मैं आपकी शरण में आया हूँ॥ ४९॥ श्रीनाथ! कमलदललोचन! गोविन्द! मधुसूदन! जनार्दन! मैं अपने लिये पुत्ररूपी फल की सिद्धि के लिये आपकी आराधना करता हूँ॥ ५०॥ जो मैया (माता) यशोदा के मुखारविन्द की ओर देखते हुए मन्द हँसी के साथ उनके एक स्तन का दुग्धपान कर रहे हैं और दूसरे स्तन को भी (अपनी छोटी—छोटी) अंगुलियों से छू रहे हैं और जिनका प्रत्येक अंग उज्ज्वल आभा से प्रकाशमय होता है। मैया यशोदा के गोद में बैठे हुए उन बाल—मुकुन्द की मैं वन्दना करता हूँ॥ ५१॥ कमललोचन! मैं आपसे पुत्र प्राप्ति के लिये प्रार्थना करता हूँ। श्रीकृष्ण! मुझे पुत्र दीजिये। (क्योंकि) मैं आपकी शरण में आया हुआ हूँ॥ ५२॥ जगत्पते! हमें पुत्र की प्राप्ति हो। इसी अभिलाषा से हम आपका चिन्तन करते हैं। (अतः) आप मुझे जल्द ही पुत्र प्रदान करें। मुनियों से वन्दित श्रीकृष्ण! आपको मुझे (निःसन्देह) अवश्य ही मेरी प्रार्थित वस्तु सन्तान देनी चाहिए॥ ५३॥

वासुदेव जगन्नाथ श्रीपते पुरुषोत्तम।
कुरु मां पुत्रदत्तं च कृष्ण देवेन्द्रपूजित॥ ५४॥
कुरु मां पुत्रदत्तं च यशोदाप्रियनन्दन।
मह्यं च पुत्रसन्तानं दातव्यं भवता हरे॥ ५५॥
वासुदेव जगन्नाथ गोविन्द देवकीसुत।
देहि मे तनयं राम कौसल्याप्रियनन्दन॥ ५६॥
पद्मपत्राक्ष गोविन्द विष्णो वामन माधव।
देहि मे तनयं सीताप्राणनायक राघव॥ ५७॥
कञ्जाक्ष कृष्ण देवेन्द्रमण्डित मुनिवन्दित।
लक्ष्मणाग्रज श्रीराम देहि मे तनयं सदा॥ ५८॥
देहि मे तनयं राम दशरथप्रियनन्दन।
सीतानायक कञ्जाक्ष मुचुकुन्दवरप्रद॥ ५९॥
विभीषणस्य या लङ्का प्रदत्ता भवता पुरा।
अस्माकं तत्प्रकारेण तनयं देहि माधव॥ ६०॥

---

**भावार्थ**—वासुदेव! जगन्नाथ! श्रीपते! पुरुषोत्तम! देवताओं के राजा इन्द्र से पूजित श्रीकृष्ण! मुझे पुत्र दान कीजिये॥ ५४॥ यशोदा के प्रिय नन्दन! मुझे पुत्र प्रदत्त कीजिये। हरे! आपको मुझे पुत्ररूप सन्तान का दान अवश्य ही करना चाहिए॥ ५५॥ वासुदेव! जगन्नाथ! गोविन्द! देवकीकुमार! कौशल्या के (सबसे) प्रियपुत्र (श्री) राम! मुझे पुत्र प्रदान कीजिये॥ ५६॥ कमलदललोचन! गोविन्द! विष्णो! वामन! माधव! सीता के प्राणवल्लभ! रघुनन्दन! मुझे पुत्र दीजिये॥ ५७॥ कमलनयन श्रीकृष्ण! देवराज (इन्द्र)! से अलंकृत और पूजित हरे! लक्ष्मण के बड़े भाई! मुनियों से वन्दित श्रीराम! मुझे सदा के लिये पुत्र प्रदान कीजिये॥ ५८॥ दशरथ के प्रिय पुत्र श्रीराम! सीतापते! कमलनयन! मुचुकुन्द को वर प्रदत्त करनेवाले श्रीकृष्ण! मुझे पुत्र दीजिये॥ ५९॥ माधव! आपने पूर्वकाल (त्रेता युग) में जो विभीषण को लंका का राज्य दिया था, उसी प्रकार हमें भी पुत्र प्रदान कीजिये॥ ६०॥

भवदीयपदाम्भोजे चिन्तयामि निरन्तरम्।
देहि मे तनयं सीताप्राणवल्लभ राघव॥ ६१॥
राम मत्काम्यवरद पुत्रोत्पत्तिफलप्रद।
देहि मे तनयं श्रीश कमलासनवन्दित॥ ६२॥
राम राघव सीतेश लक्ष्मणानुज देहि मे।
भाग्यवत्पुत्रसन्तानं दशरथात्मज श्रीपते॥ ६३॥
देवकींगर्भसंजात यशोदाप्रियनन्दन।
देहि मे तनयं राम कृष्ण गोपाल माधव॥ ६४॥
कृष्ण माधव गोविन्द वामनाच्युत शङ्कर।
देहि मे तनयं श्रीश गोपबालकनायक॥ ६५॥
गोपबाल महाधन्य गोविन्दाच्युत माधव।
देहि मे तनयं कृष्ण वासुदेव जगत्पते॥ ६६॥
दिशतु दिशतु पुत्रं देवकीनन्दनोऽयं
दिशतु दिशतु शीघ्रं भाग्वत्पुत्रलाभम्।
दिशतु दिशतु श्रीशो राघवो रामचन्द्रो
दिशतु दिशतु पुत्रं वंशविस्तारहेतोः॥ ६७॥

---

**भावार्थ**—सीता के प्राणवल्लभ रघुनन्दन! मैं आपके चरणारविन्दों का सदैव चिन्तन करता हूँ, मुझे पुत्र प्रदत्त कीजिये॥ ६१॥ मुझे मनोवांछित वर तथा पुत्रोत्पत्तिरूप फल प्रदत्त करनेवाले श्रीराम! (चतुर्मुख) ब्रह्माजी के द्वारा वन्दित लक्ष्मीपते! आप मुझे पुत्र दीजिये॥ ६२॥ लक्ष्मण के बड़े भाई! सीता के प्राणवल्लभ! दशरथकुमार! रघुकुलनन्दन! श्रीराम! श्रीपते! आप मुझे भाग्यवान् पुत्ररूपी सन्तान प्रदान कीजिये॥ ६३॥ देवकी के गर्भ से पैदा हुए यशोदा के लाडले लाल! गोपालकृष्ण! श्रीराम! माधव! मुझे पुत्र दीजिये॥ ६४॥ माधव! गोविन्द! वामन! अच्युत! कल्याणकारी लक्ष्मी के पति! गोप–बालनायक! श्रीकृष्ण! मुझे पुत्र दीजिये॥ ६५॥ गोपकुमार! सभी से बढ़कर धन्य! गोविन्द! अच्युत! माधव! वासुदेव! जगत्पते! श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिए॥ ६६॥ ये भगवन् देवकीनन्दन मुझे पुत्र देवें, मुझे पुत्र देवें। शीघ्र ही भाग्यशाली पुत्र की प्राप्ति करावें। श्रीसीता के स्वामी! रघुकुलनन्दन! श्रीरामचन्द्र! मेरे वंश को बढ़ाने के लिए मुझे पुत्र प्रदान करें, पुत्र प्रदान करें॥ ६७॥

दीयतां वासुदेवेन तनयो मत्प्रियः सुतः।
कुमारो नन्दनः सीतानायकेन सदा मम॥ ६८॥
राम राघव गोविन्द देवकीसुत माधव।
देहि मे तनयं श्रीश गोपबालकनायक॥ ६९॥
वंशविस्तारकं पुत्रं देहि मे मधुसूदन।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७०॥
ममाभीष्टसुतं देहि कंसारे माधवाच्युत।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७१॥
चन्द्रार्ककल्पपर्यन्तं तनयं देहि माधव।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७२॥
विद्यावन्तं बुद्धिमन्तं श्रीमन्तं तनयं सदा।
देहि मे तनयं कृष्ण देवकीनन्दन प्रभो॥ ७३॥
नमामि त्वां पद्मनेत्र सुतलाभाय कामदम्।
मुकुन्दं पुण्डरीकाक्षं गोविन्दं मधुसूदनम्॥ ७४॥

---

**भावार्थ**—वसुदेवनन्दन! भगवान् श्रीकृष्ण! और सीता के पति भगवान् श्रीराम! सदैव मुझे आनन्द देनेवाले कुमारोपम प्रियपुत्र प्रदत्त करें ॥ ६८ ॥ राघव! गोविन्द! देवकीपुत्र! माधव! श्रीपते! गोपबालनायक श्रीकृष्ण! मुझे पुत्र दीजिये ॥ ६९ ॥ मधुसूदन! मुझे मेरे वंश को बढ़ानेवाला पुत्र दीजिये। पुत्र दीजिये। पुत्र दीजिये। (क्योंकि) मैं आपकी शरण में आया हूँ॥ ७० ॥ कंसारे! माधव! अच्युत! मुझे मनोवांछित पुत्र प्रदत्त कीजिए। पुत्र दीजिये। पुत्र दीजिये। (क्योंकि) मैं आपकी शरण में आया हूँ॥ ७१ ॥ माधव! जब तक चन्द्र, सूर्य और कल्प की स्थिति रहे, तब तक के लिये मुझे पुत्रपरम्परा प्रदत्त कीजिये। पुत्र दीजिये। पुत्र दीजिये। मैं आपकी शरण में आया हूँ॥ ७२ ॥ प्रभो! देवकीनन्दन श्रीकृष्ण! आप हमेशा के लिये विद्वान्, बुद्धिमान् एवं धन से युक्त पुत्र प्रदान कीजिए ॥ ७३ ॥ कमलनयन श्रीकृष्ण! मैं पुत्रप्राप्ति के लिए सम्पूर्ण कामनाओं के दाता आप पुण्डरीकाक्ष श्रीकृष्ण मुकुन्द मधुसूदन गोविन्द को (सदैव) नमस्कार करता हूँ॥ ७४ ॥

भगवन् कृष्ण गोविन्द सर्वकामफलप्रद।
देहि मे तनयं स्वामिंस्त्वामहं शरणं गतः॥ ७५॥
स्वामिंस्त्वं भगवन् राम कृष्ण माधव कामद।
देहि मे तनयं नित्यं त्वामहं शरणं गतः॥ ७६॥
तनयं देहि गोविन्द कञ्जाक्ष कमलापते।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७७॥
पद्मापते पद्मनेत्र प्रद्युम्नजनक प्रभो।
सुतं देहि सुतं देहि त्वामहं शरणं गतः॥ ७८॥
शङ्ख-चक्र-गदा-खड्ग-शार्ङ्गपाणे रमापते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ७९॥
नारायण रमानाथ राजीवपत्रलोचन।
सुतं मे देहि देवेश पद्मपद्मानुवन्दित॥ ८०॥
राम राघव गोविन्द देवकीवरनन्दन।
रुक्मिणीनाथ सर्वेश नारदादिसुरार्चित॥ ८१॥

---

**भावार्थ**—समस्त मनोवांछित फलों को देनेवाले अर्थात् दाता! गोविन्द! स्वामिन्! भगवन्! श्रीकृष्ण! मुझे पुत्र देवें। (क्योंकि) मैं आपकी शरण में आया हूँ॥ ७५॥ स्वामिन्! भगवन्! राम! कृष्ण! कामनाओं को पूर्ण करनेवाले माधव! मुझे सदैव ही पुत्र प्रदान करें, मैं आपकी शरण में आया हूँ॥ ७६॥ गोविन्द! कमलनयन! कमलापते! मुझे पुत्र दीजिये। पुत्र दीजिये। पुत्र दीजिये। मैं आपकी शरण में आया हूँ॥ ७७॥ लक्ष्मीपते! कमललोचन! प्रद्युम्न को जन्म देनेवाले प्रभो! मुझे भी पुत्र दीजिये। मुझे भी पुत्र दीजिये। मैं आपकी शरण में आया हूँ॥ ७८॥ अपने हाथों में शंख, चक्र, गदा, खड्ग व शार्ङ्गधनुष धारण करनेवाले लक्ष्मी के पति! श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिए। (क्योंकि) मैं आपकी शरण में आया हूँ॥ ७९॥ नारायण! रमानाथ! कमलदललोचन! देवेश्वर! कमलालया! लक्ष्मी से वन्दित श्रीकृष्ण! मुझे पुत्र प्रदान कीजिए॥ ८०॥ राम! राघव! गोविन्द! देवकी के (सर्व) श्रेष्ठ पुत्र! रुक्मिणी के स्वामी! सर्वेश्वर! नारद आदि महर्षियों और देवताओं से पूजित॥ ८१॥

देवकीसुत गोविन्द वासुदेव जगत्पते।
देहि मे तनयं श्रीश गोपबालकनायक॥ ८२॥
मुनिवन्दित गोविन्द रुक्मिणीवल्लभ प्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ८३॥
गोपिकार्जितपङ्केजमरन्दासक्तमानस।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ८४॥
रमाहृदयपङ्केजलोल माधव कामद।
ममाभीष्टसुतं देहि त्वामहं शरणं गतः॥ ८५॥
वासुदेव रमानाथ दासानां मङ्गलप्रद।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ८६॥
कल्याणप्रद गोविन्द मुरारे मुनिवन्दित।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ८७॥
पुत्रप्रद मुकुन्देश रुक्मिणीवल्लभ प्रभो।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ८८॥

---

**भावार्थ**—देवकीपुत्र गोविन्द! वासुदेव! जगत्पते! श्रीकान्त! गोपबालनायक! मुझे पुत्र प्रदान कीजिये॥ ८२॥ मुनियों से वन्दित गोविन्द! रुक्मिणीवल्लभ! प्रभो! श्रीकृष्ण! मुझे पुत्र प्रदान कीजिये, मैं आपकी शरण में आया हूँ॥ ८३॥ गोपियों द्वारा लाकर समर्पित किये गये कमलों के मकरन्द में आसक्त चित्त (हृदय) वाले श्रीकृष्ण! मुझे पुत्र दीजिये। (क्योंकि) मैं आपकी शरण में आया हूँ॥ ८४॥ लक्ष्मी के हृदयकमल के लिये लोलुप माधव! सम्पूर्ण कामनाओं को पूर्ण करनेवाले श्रीकृष्ण! मुझे मनोवांछित पुत्र प्रदत्त कीजिये, (क्योंकि) मैं आपकी शरण में आया हूँ॥ ८५॥ अपने सेवकों के लिये मङ्गलदायक रमानाथ वासुदेव श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिए, (क्योंकि) मैं आपकी शरण में आया हूँ॥ ८६॥ कल्याण करनेवाले गोविन्द! मुनियों से वन्दित मुरनामक राक्षस के शत्रु श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिये, (क्योंकि) मैं आपकी शरण में आया हूँ॥ ८७॥ पुत्र को देनेवाले मुकुन्द! ईश्वर! रुक्मिणीवल्लभ प्रभो! श्रीकृष्ण! मुझे पुत्र देवें, मैं आपकी शरण में आया हूँ॥ ८८॥

पुण्डरीकाक्ष गोविन्द वासुदेव जगत्पते।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ८९॥
दयानिधे वासुदेव मुकुन्द मुनिवन्दित।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ९०॥
पुत्रसम्पत्प्रदातारं गोविन्दं देवपूजितम्।
वन्दामहे सदा कृष्णं पुत्रलाभप्रदायिनम्॥ ९१॥
कारुण्यनिधये गोपीवल्लभाय मुरारये।
नमस्ते पुत्रलाभार्थं देहि मे तनयं विभो॥ ९२॥
नमस्तस्मै रमेशाय रुक्मिणीवल्लभाय ते।
देहि मे तनयं श्रीश गोपबालकनायक॥ ९३॥
नमस्ते वासुदेवाय नित्यश्रीकामुकाय च।
पुत्रदाय च सर्पेन्द्रशायिने रङ्गशायिने॥ ९४॥
रङ्गशायिन् रमानाथ मङ्गलप्रद माधव।
देहि मे तनयं श्रीश गोपबालकनायक॥ ९५॥

---

**भावार्थ**—पुण्डरीकाक्ष! गोविन्द! वासुदेव! जगदीश्वर! श्रीकृष्ण! मुझे पुत्र दीजिये, मैं आपकी शरण में आया हूँ॥ ८९॥ दयानिधे! वासुदेव! मुनियों से वन्दित मुकुन्द! श्रीकृष्ण! मुझे पुत्र प्रदत्त कीजिये, मैं आपकी शरण में आया हूँ॥ ९०॥ पुत्र एवं सम्पत्ति को देनेवाले, पुत्रलाभदायक, देवताओं से पूजित गोविन्द! श्रीकृष्ण! की हम सदैव वन्दना करते हैं॥ ९१॥ हे प्रभो! आप करुणा के सागर (समुद्र) हैं, गोपियों के प्राणवल्लभ व मुरनामक दैत्य के शत्रु भी हैं, पुत्र प्राप्ति के लिये आपको मेरा नमस्कार है, (अतः) मुझे पुत्र प्रदत्त कीजिए॥ ९२॥ लक्ष्मी के स्वामी और रुक्मिणी के प्राणवल्लभ! इस प्रकार के आप भगवान् श्रीकृष्ण को नमस्कार है। गोपबालकों के नायक (नेता) श्रीकान्त! मुझे पुत्र दीजिये॥ ९३॥ सदैव ही श्रीजी (लक्ष्मी) की कामना रखनेवाले आप वासुदेव को नमस्कार है। आप पुत्र देनेवाले व नागराज शेष की शय्या पर शयन करनेवाले और श्रीरंगक्षेत्र में शयन करनेवाले हैं, आपको नमस्कार है॥ ९४॥ रङ्गशायी रमानाथ! मङ्गलदायक माधव! गोपबालक–नायक श्रीपते! मुझे पुत्र प्रदान करें॥ ९५॥

दासस्य मे सुतं देहि दीनमन्दार राघव।
सुतं देहि सुतं देहि पुत्रं देहि रमापते॥ ९६॥
यशोदातनयाभीष्टपुत्रदानरतः सदा।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ९७॥
मदिष्टदेव गोविन्द वासुदेव जनार्दन।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः॥ ९८॥
नीतिमान् धनवान् पुत्रो विद्यावांश्च प्रजायते।
भगवंस्त्वत्कृपायाश्च वासुदेवेन्द्रपूजित॥ ९९॥
यः पठेत् पुत्रशतकं सोऽपि सत्पुत्रवान् भवेत्।
श्रीवासुदेवकथितं वासुदेवेन्द्रपूजित॥ १००॥
जपकाले पठेन्नित्यं पुत्रलाभं धनं श्रियम्।
ऐश्वर्यं राजसम्मानं सद्यो याति न संशयः॥ १०१॥

॥ श्रीसन्तानगोपालस्तोत्रं सम्पूर्णः॥

---

**भावार्थ**—हे रघुनन्दन! दीनों (दुःखियों) के लिए आप कल्पवृक्षस्वरूप हैं। मुझ दास को पुत्र दीजिए। रमापते! पुत्र दीजिये। पुत्र दीजिये। पुत्र दीजिये॥ ९६॥ सदैव मन की इच्छा के अनुरूप पुत्र देने में तत्पर रहनेवाले यशोदा के पुत्र श्रीकृष्ण! मैं आपकी शरण में आया हूँ, मुझे पुत्र प्रदान कीजिये॥ ९७॥ मेरे इष्टदेव गोविन्द! वासुदेव! जनार्दन! श्रीकृष्ण! मुझे पुत्र देवें, मैं आपकी शरण में आया हूँ॥ ९८॥ भगवन्! इन्द्र से पूजित वासुदेव! आपकी कृपा से नीतिज्ञ, धनवान् एवं विद्वान् पुत्र पैदा होता है॥ ९९॥ जो वासुदेव द्वारा कहे गये इस पुत्र शतक (सौ श्लोकों)का पाठ करता है, वह भी उत्तम पुत्र से युक्त होता है। यह स्तोत्ररत्न सुख को भी देनेवाला है॥ १००॥ जो प्रतिदिन जप के समय इसका पाठ करता है, उसे तत्काल पुत्रलाभ होता है और वह शीघ्र ही धन–सम्पत्ति, ऐश्वर्य और राजसम्मान को प्राप्त कर लेता है। इसमें (किसी भी प्रकार का) संशय नहीं है॥ १०१॥

॥ हिन्दी टीका सहित श्रीसन्तानगोपालस्तोत्र सम्पूर्ण हुआ॥

## श्रीगोपालाक्षयकवचम्

श्रीनारद उवाच

इन्द्राद्यमरवर्गेषु ब्रह्मन् यत्परमाऽद्भुतम्।
अक्षयं कवचं नाम कवचस्य मम प्रभो॥ १ ॥
यद्धृत्वाऽऽकर्ण्य वीरस्तु त्रैलोक्यविजयी भवेत्।

ब्रह्मोवाच

शृणु पुत्र! मुनिश्रेष्ठ!।
कवचं परमाद्भुतम्॥ २ ॥
इन्द्रादि-देववृन्दैश्च नारायणमुखाच्छ्रुतम्।
त्रैलोक्यविजयस्यास्य कवचस्य प्रजापतिः॥ ३ ॥
ऋषिश्छन्दो देवता च सदा नारायणः प्रभुः।

विनियोग:-ॐ अस्य श्रीत्रैलोक्यविजयाक्षयकवचस्य प्रजापतिर्ऋषिः, अनुष्टुप्-छन्दः, श्रीनारायणः परमात्मा देवता, धर्मा-ऽर्थ-काम-मोक्षार्थे जपे विनियोगः।

पादौ रक्षतु गोविन्दो जङ्घे पातु जगत्प्रभुः॥ ४ ॥
ऊरू द्वौ केशवः पातु कटी दामोदरस्ततः।
वदनं श्रीहरिः पातु नाडी देशं च मेऽच्युतः॥ ५ ॥

---

**भावार्थ**—नारदजी ने कहा—हे ब्रह्माजी! इन्द्र आदि देवता वर्गों में जो परम अद्भुत कवच है, हे प्रभो! वह मुझसे कहिए॥ १॥ जिसको धारण करके और श्रवण करके वीर त्रैलोक्य विजयी हो जाता है। ब्रह्माजी ने कहा—हे मुनिश्रेष्ठ! परम अद्भुत कवच को सुनो॥ २॥ इन्द्र आदि देवताओं के द्वारा नारायण के मुख से (यह कवच) सुना गया है। इस त्रैलोक्य कवच के प्रजापति॥ ३॥ ऋषि हैं, छन्द और देवता सदा नारायण प्रभु हैं।

विनियोग—कर्ता हाथ में जल लेकर 'ॐ अस्य से जपे विनियोगः' तक का उच्चारण करके जल को भूमि में छोड़ दें।

गोविन्द दोनों चरणों की रक्षा करें। जगत्प्रभु! दोनों जाँघों की रक्षा करें॥ ४॥

केशव दोनो ऊर्वो की रक्षा करें। दामोदर कटि की रक्षा करें। श्रीहरि वदन की रक्षा करें, अच्युत मेरी नाड़ियों की एवं देश की रक्षा करें॥ ५॥

वामपार्श्वं तथा विष्णुर्दक्षिणं च सुदर्शनः।
बाहुमूले वासुदेवो हृदयं च जनार्दनः॥ ६ ॥
कण्ठं पातु वराहश्च कृष्णश्च मुखमण्डलम्।
कर्णौ मे माधवः पातु हृषीकेशश्च नासिके॥ ७ ॥
नेत्रे नारायणः पातु ललाटं गरुडध्वजः।
कपोलं केशवः पातु चक्रपाणिः शिरस्तथा॥ ८ ॥
प्रभाते माधवः पातु मध्याह्ने मधुसूदनः।
दिनान्ते दैत्यनाशश्च रात्रौ रक्षतु चन्द्रमाः॥ ९ ॥
पूर्वस्यां पुण्डरीकाक्षो वायव्यां च जनार्दनः।
इति ते कथितं वत्स सर्वमन्त्रौघविग्रहम्॥ १०॥
तव स्नेहान्मयाऽऽख्यातं न वक्तव्यं तु कस्यचित्।
कवचं धारयेद् यस्तु साधको दक्षिणे भुजे॥ ११॥
देवा मनुष्या गन्धर्वा यज्ञास्तस्य न संशयः।
योषिद्वामभुजे चैव पुरुषो दक्षिणे भुजे॥ १२॥

---

**भावार्थ**—बायें पार्श्व की विष्णु रक्षा करें तथा दक्षिण पार्श्व की सुदर्शन रक्षा करें। बाहुमूल की वासुदेव रक्षा करें और हृदय की रक्षा जनार्दन करें॥ ६॥ भगवान् वाराह कण्ठ की रक्षा करें और कृष्ण मुखमण्डल की रक्षा करें। माधव दोनों कानों की रक्षा करें और (भगवान्) ऋषिकेश नासिका की रक्षा करें॥ ७॥ नारायण दोनों आँखों की रक्षा करें और (भगवान्) गरुडध्वज ललाट की रक्षा करें। केशव कपोल की रक्षा करें और चक्रपाणि सिर की रक्षा करें॥ ८॥ प्रातः भगवान् मेरी रक्षा करें। ध्यान में मधुसूदन रक्षा करें। दैत्यनाश सायंकाल में मेरी रक्षा करें और रात्रि में चन्द्रमा रक्षा करें॥ ९॥ पूर्व में पुण्डरीकाक्ष एवं वायव्य में जनार्दन मेरी रक्षा करें। हे वत्स! सभी मन्त्रों के समुदाय स्वरूप इस कवच को मैंने तुमसे कहा॥ १०॥ तुम्हारे स्नेह से मैंने तुझसे इसे कह दिया है। किसी दूसरे से नहीं कहना चाहिए, जो साधक दाहिनी भुजा में इस कवच को धारण करता है॥ ११॥ देव, मनुष्य, गन्धर्व सभी उसके वश में हो जाते हैं। इसमें सन्देह नहीं है। स्त्री बायें भुजा में और पुरुष दाहिनी भुजा में॥ १२॥

